षष्ठे नैमित्तिकाधिकरणे,—महायगम्यागम्यचिन्तागमनकारणानि, उपावर्त्तनविधिः, कान्ताहृत्तं, स्वर्णागमापायाः, दिग्ज्ञानप्रतिपत्तिः, निष्क्रामनक्रमाः, विशीर्णप्रतिसन्धानं, लाभालाभावशेषाः, अर्थानर्थानुबन्धसंशयः, विचारविशेषाश्चेति दश प्रकरणानि ।

(पुस्तकेऽस्मिन् औपनिषदिक सप्तममधिकरणं नास्ति )

(तत्रत्य विषया यथा,—सुभगङ्करण, वशीकरणं, वृष्ययोगाः, नष्टरागप्रत्यानयनं, वृद्धिविधयः, चित्रयोगाश्चेति षट् प्रकरणानीति ।)

---

**No 2108** वैष्णवसिद्धान्तवैजयन्ती, प्रकाशिकासहिता । Substance, country-made paper, 12 × 4 inches. Folia, 116 Lines, 12 on a page Extent, 4,182 Slokas Character, Bengali Date, ? Place of deposit, S'ántipur, Pandit Kálidása Vidyávágísa Appearance, old Prose and verse. Correct.

**Vaishnava-siddhánta-vaijayantí** with a commentary entitled **Prakásiká.** A manual of Vaishnava faith and worship. By Raghavendra Muni.

**Beginning** उद्धर्त्तुं भवसागरातुरनरान् धातुर्विधातुं वच-
स्सिद्धातुं पतगेन्द्रकेतुरवितुं लीलावतीर्णो धरां ।
धर्म्माणामपि धर्मकतुरमता सेतुः मता सात्त्वता
जीयातु जगदिन्द्रजालरचनाहेतुं हरिः पातु वः ॥
श्रीमद्वैष्णवसिद्धान्तवैजयन्ती, प्रकाश्यते ।
श्रुतिस्मृतिप्रमाणेन सत्तर्केण स्वयं कृता ॥

इति वस्तु प्रारिप्सितग्रन्थारम्भसम्भावितविघ्नविघाताय सदाचारपरम्परापरिपालनाय च स्वग्रन्थप्रतिपाद्य वेदान्तवेद्यं वस्तु प्रणौति विश्वेषामित्यादिपद्येन ॥

विश्वेषामनवद्यमागमगिरामापाद्यमाद्यं पर
रुद्राद्यैरपि विद्यया परमया नासाद्यते यन्महः ।
प्रेम्णाचिद्घनविग्रहो मुकुरहो गोपीभिरासादितः
सोऽयं नन्दसुतोऽभिनन्दति सदानन्दाय वृन्दावने ॥ इत्यादि ।

**End.** गौड़ादागत्य वृन्दावनभुवि वसता राघवेन्द्राभिधेन
प्रायो जित्वा विवादान् निगमपथनयैर्ज्जीवसमारप्रान्त्यै ।
सिद्धान्तैर्वैष्णवानां स्वमतिविरचिता वैजयन्ती विचित्रा
कण्ठे धार्य्या कवीन्द्रैरखिलगुणवती वादिविध्वंसनाय ॥
श्रीमद्वैष्णवसिद्धान्तवैजयन्तीप्रकाशिका ।
दीपिकेव करे धार्य्या साधुवर्य्यायतीश्वरैः ॥

Colophon. इति श्रीराघवेन्द्रमुनिप्रणीतायां वैष्णवसिद्धान्तवैजयन्त्यां भगवत्स्वरूपनिरूपणो नाम पञ्चमो ग्रन्थः। समाप्तश्चायं ग्रन्थः।

विषयः। ब्रह्मणः साकारत्वकथनं। श्रीकृष्णस्यैव परब्रह्मशब्दवाच्यत्वनिरूपणं। श्रीकृष्णविग्रहस्य सच्चिदानन्दरूपतया नित्यत्वकथनं। अत्र विविधवादनिरसनं। जगन्नित्यत्वादिवादिनां विप्रतिपत्तिनिरासपूर्व्वकं भगवानेव अयस्कान्तमणिवत्सन्निधिमात्रेणाविद्याविवर्त्तानां कारणमितिनिरूपणं। संसारस्य स्वप्नायमानत्वकथनं। तत्र विविधवादखण्डन अध्यासस्वरूपविवेचनादिकं। जीवस्य व्यवहारदशायां संसारबन्धो न तु परमार्थतः तस्य साक्षाज्जगदीश्वराभेदश्रवणादितिनिरूपणं। वैराग्योपयोगित्वेन संसारस्य—मिथ्यात्वं निरूप्य तन्निरस्तकारणं किञ्चिदस्ति न वेति वादिविप्रतिपत्तेस्तन्निरूपणं। तत्र सांख्यमतमुपपाद्य तत्खण्डनं। पातञ्जलमतोपपादनपूर्व्वकं तन्निरसनं। वैशेषिकमतोपपादनपूर्व्वकं तत्खण्डनं। न्यायमतोपपादनं तत्खण्डनञ्च। एवं शून्यवादिस्वभाववादिमीमांसकादिमतान्युपपाद्य तत्खण्डनपुरःसरं भगवानेव तत्कारणमिति सप्रपञ्चप्रपञ्चनं। नानाजीववादखण्डनपुरःसरमेकजीववादव्यवस्थापनं। आत्मस्वरूपनिरूपणमुखेन अन्यान्यमतखण्डनं। तत्र आत्मख्यातिवादखण्डनं। असत्ख्यातिकथनं। अख्यातिनिरूपणं। अन्यथाख्यातिनिरूपणं। अनिर्व्वाच्यख्यातिनिरूपणं। तत्र अनिर्व्वाच्यत्वस्वरूपादिविवेचनं। अविद्यास्वरूपादिनिर्णयः। भेदवादखण्डनं। आत्मनः स्वप्रकाशत्वकथनं। संवित्स्वरूपविवेचनं। वेदस्य स्वतः प्रामाण्यनिरूपणं। तस्य अपौरुषेयत्वादिकथनञ्च। कर्म्म-ज्ञानकाण्डयोः सामञ्जस्यकथनं। गुरूपसदनादिप्रकारकथनं। श्रवणमननादिस्वरूपकथनादिकं। समाधिलक्षणतद्भेदादिकीर्त्तनं। तत्त्वज्ञानान्मुक्तिरितिविवेचनं। जीवन्मुक्तस्वरूपादिकथनं। मोक्षस्वरूपविवेचनं। अत्र तार्किकादिमतखण्डनं। वेदान्तमतखण्डनं। मुक्त्यधिकारिनिरूपणं। संसारलक्षणादिकथनं। संसाराद्विरक्तस्य सन्न्यासिन एव मोक्षाधिकारो नान्यस्येति निरूपणं। तथा भगवत्प्राप्तिरेव मोक्ष इति निरूपणं। अत्र पाशुपतादिमतखण्डनं। भगवदुपासनादिफलकीर्त्तनं। द्वैतश्रुतिसमन्वयादिकथनं। भगवद्भक्तलक्षणं। तद्भेदादिकथनञ्च। भगवद्भक्तानां मोक्षेष्वपि स्पृहाभाव इत्यादि वाक्यानां समाधानादिकथनं। भक्तिलक्षणं। तथासाध्यसाधनभेदेन द्वैविध्यकथनं। साध्यरूपापि द्विविधा ज्ञानलक्षणा प्रेमलक्षणा चेति। तथा श्रवणकीर्त्तनादिनवविधसाधनभक्तिनिरूपणं। कर्म्मयोगस्यापि भक्तिसाधनार्थत्वाद्भक्तेः प्रागेवकर्त्तव्यतेतिनिरूपणं। धर्म्मस्वरूपादिनिरूपणं। साकार-निराकार-सगुण-निर्गुणत्वादिप्रतिपादिकानां श्रुतीनां समाधानकथनं। भगवच्छरीरस्य नित्यत्वादिनिरूपणमुखेन तार्किकादिमतनिरसनं। भगवल्लीलादिचिन्तनं। रमागोपीपरिकरस्य भगवच्छक्तित्वकथनं। लीलावतारतात्पर्य्यकथनं। गोलोकादिस्थानस्य नित्यत्वकथनञ्च ५.

---

**No. 2109. स्कन्दपुराणे,—केदारखण्डम्।** Substance, country-made paper, 18 × 3 inches. Folia, 165. Lines, 6 on a page. Extent, 4,010 ślokas.

Character, Bengali. Date, ? Place of deposit, Ránághát, Bábu Surendranátha Pálachaudhúri; another copy at Darbhángá, Bábu Gaureśvara Siñha. Appearance, fresh. Verse. Generally correct.

**Kedára-khaṇḍa of the Skanda Puráṇa.** This is one of the several books or Khaṇḍas, of the Skanda Puráṇa It is divided into 32 chapters, and comprises a number of legends designed for the glorification of S'iva as the supreme divinity.

CONTENTS: I. Story of Daksha's visit to Naimisha forest, where he was disrespectfully treated by his son-in-law S'iva, and for which he rebuked S'iva.

II—III. Daksha commences a great feast to which he does not invite S'iva. Dákshávaṇi hears of the feast, and obtains her husband's permission to go to her father's house, where she commits suicide. S'iva hears the news, and, in a fit of anger, plucks out a lock of hair, which becomes two demons Káli and Vírabhadra.

IV—V. The demons wage war with the gods. Decapitation of Daksha; his head replaced by that of a goat. His hymn to S'iva. Adoration of S'iva, and advantages of putting on the tridental sectarial mark, ashes, &c. Story of Nandi, a Vaisya of Avanti, who was a great devotee.

VI—VII. S'iva's grief at the loss of his wife; his asceticism. Origin of the Lingam, its worship. S'aiva philosophy. Story of Sundarí, daughter of a king of Kásí.

VIII. Lingams of various kinds. Dispute between the Devas and Rávana. Devas repair to Vishṇu, and devise means for the destruction of Rávaṇa.

IX—XIV. The churning of the ocean. Origin of the Hálábala poison. Birth of Gaṇes'a. Consequences of the churning.

XV—XIX. Story of Nahusa. Ditto of Dadhichi. Ditto of Bali and of the Dwarf incarnation.

XX—XXV. The superiority of the Lingam over Brahmá and Vishṇu. Story of Táraka, a demon, who oppressed the Devas. Marriage of S'iva with Umá.

XXVI—XXXI. Honey-moon of S'iva on the Gandhamádana mountain. Birth of Kártika. His battle with Taraka. Destruction of Táraka. Adoration of Kártika.

XXXII. Story of S'vetarájá. Merits of the S'ivaratri fast. Lu-

nations most appropriate for the worship of S'iva, Gánes'a, Kártika, &c. Gambling between S'iva and Umá, S'iva, losing everything by play, retires from Kailása to a forest. Umá, assuming the disguise of a wild hill woman, repairs to S'iva. Their reconciliation and adoration by the Devas. Merits of reciting the Kedára-khanda.

**Beginning.** यस्याज्ञया जगत्स्रष्टा विरिञ्चिः पालको हरिः ।
संहर्त्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने ॥
तीर्थानामुत्तमं तीर्थं क्षेत्राणां क्षेत्रमुत्तमम् ।
तत्रैव नैमिषारण्ये शौनकाद्यास्तपोधनाः ॥
दीर्घसत्रं प्रकुर्व्वन्तः सत्रिणां सुमतेन सः ।
तेषां सन्दर्शनोत्सुक्यादागतो हि महातपाः ॥
व्यासशिष्यो महाप्राज्ञो लोमशो नाम नामतः ।
तत्रागतं ते ददृशुर्मुनयो दीर्घसत्रिणः ॥
उत्तस्थुर्युगपत्सर्व्वे सार्घ्यहस्ताः समुत्सुकाः ।
दत्त्वार्घ्यपाद्यमसकृन्मुनयो वीतकल्मषाः ॥
तं पप्रच्छुर्महाभागाः शिवधर्म्मं सुविस्तरं ।
मुनय ऊचुः ।
कथयस्व महाप्राज्ञ देवदेवस्य शूलिनः ।
महिमानं महाभाग ध्यानार्च्चनसमन्वितम् ॥
सम्मार्ज्जने किं फलं स्यात्तथारङ्गावलीषु च ॥ इत्यादि ।

**End.** शृण्वन्ति चैव ये भक्त्या शम्भोर्माहात्म्यमुत्तमम् ।
शैवशास्त्रमिदं विप्रास्ते यान्ति परमां गतिम् ॥

**Colophon.** इति श्रीस्कान्दे महापुराणे केदारखण्डे शैवशास्त्रे अष्टशतचतुर्दशाधिकत्रिसहस्रे पञ्चत्रिंशोऽध्यायः । समाप्तमिदं केदारखण्डम् । (इतः परं स्कन्दपुराणमाहात्म्यकथनश्लोका विद्यन्ते ।)

विषयः । १मे, अध्याये,—लोमशेन सह शौनकादीनां संवादेन भगवान् शूलपाणिरेव परंब्रह्म तदुपसेवया च जीवोऽमृतत्वमाप्नोतीति निरूपणं । अथैकदा नैमिषारण्ये समागतस्य दक्षस्य पुरतः प्राणिपातपुरःसरं दण्डायमानेषु सुरासुरनिकरेषु अकृतप्रणामं रुद्रं प्रति तस्य कोपादिविवरणकीर्त्तनं । दक्षनन्दिनोरन्योन्यं शापविवरणकथन ।

२-३, अध्याय,—दक्षस्य शिवरहितयज्ञानुष्ठानविवरणकथनं । अथैकदागन्धमादनपर्व्वते सह सखीभिः क्रीड़न्ती दाक्षायणी दक्षालयमुद्दिश्य प्रचलतां चन्द्रादीनां प्रवृत्तिमुपलभ्य विजयामुखात् शङ्करमभ्युपेत्य च पितृगृहगमनाय कृतानुमोदना नितरां मुमुदे ।

अथ पितृगृहं समनुप्राप्ता सतीयं पितृमुखात् पतिनिन्दनमाकर्ण्य अत्यर्थं निर्व्वेदमापन्ना हुताशनं प्रविवेश। अनन्तरं नारदमुखेन प्रवृत्तिमिमामाकर्ण्य क्रोधज्वलितो भगवान् रुद्रो जटामेकां गिरिशिरसि आस्फालयामास। ततः समुद्भूतयोः कालीवीरभद्रयोः दक्षयज्ञविनाशादिवर्णनं।

४—५, अध्याये,—इन्द्रोपेन्द्रप्रभृतिभिः सार्द्धं वीरभद्रस्य युद्धवर्णनं। ब्रह्मकृतशिवस्तोत्रकथनं। दक्षस्य छागमस्तकत्वप्राप्तिकथनं। दक्षकृतशिवस्तोत्रकथनं। शिवमाहात्म्यकथनं। शिवालयनिर्म्माणादिफलकीर्त्तनं। अथ इन्द्रसेनस्य राज्ञ उपाख्यानकथनं। करवीर अर्क-धुस्तूरादिपुष्पैः शिवपूजाकरणे उत्तरोत्तरं फलाधिक्यकथनं। त्रिपुण्ड्रमाहात्म्यकथनं। विभूतिमाहात्म्यकथनं। शिवपूजामाहात्म्यकथनमुखेन अवन्तिपुरवास्तव्यस्य नन्दिनामकवैश्यस्य उपाख्यानकथनं।

६—७ अध्याये,—लिङ्गप्रतिष्ठाविधिकथनप्रसङ्गेन सतीविरहविधुरस्य विधुभूषणस्य मनोहरवेशेन दारुवनप्रवेशवर्णनं। तत्र ऋषीणां शापेन शिवस्य षण्डत्वप्राप्तिः लिङ्गपतनवृत्तिकथनं। शिवलिङ्गस्वरूपकथनं। मुख ते अपवित्रमस्पृत सुरभिं प्रति देवानां शापदानकथनञ्च। ब्रह्मकृतलिङ्गस्तोत्रकथनं। लिङ्गार्च्चनमाहात्म्यकीर्त्तनं। स्थानभेदे शिवलिङ्गस्य नामभेदकथनञ्च। पाशुपतधर्म्मकीर्त्तनं काशीराजकुमार्य्याः सुन्दर्य्याः उद्दालकस्य ऋषेः सपर्य्याकरणवृत्तान्तकीर्त्तनं।

८ अध्याये,—इन्द्रचन्द्रसूर्य्यादीनां रत्नमृन्मयादिलिङ्गपूजनकथनं। लिङ्गमाहात्म्यकथनव्याजेन गोकर्णपर्व्वते रावणकृतलिङ्गार्चनविवरणकथनं। नन्दिना सह रावणस्य विरोधकथनं। रावणं प्रति तस्य शापदानविवरणकथनञ्च। रावणविप्रकृतानां देवानां वैकुण्ठगमनपूर्व्वकं वैकुण्ठस्तोत्रकीर्त्तनं। भगवत उपदेशेन देवानां वानररूपेण जन्मग्रहणकथनं। रामावतारकथनादिकञ्च।

९—११ अध्याये,—बलिकृतशक्रैश्वर्य्यहरणविवरणं। बलिविप्रकृतस्य इन्द्रस्य ब्रह्मलोकगमनादिकथनं। भगवत उपदेशेन तस्य सुतलगमनपूर्व्वकं बलिना सह संवादकथनं। समुद्रमन्थनवृत्तान्तकथनं। रुद्रस्य कोपात् कालकूटस्य उद्भवः, तेन च ब्रह्माण्डस्य भस्मीभूतत्वकथनञ्च। अथ हेरम्बस्य प्रार्थनया शिवलिङ्गात् ब्रह्मविष्णुप्रभृतीनां प्रादुर्भावकथनं। गणेशस्य उत्पत्त्यादिकथनञ्च। चतुर्थ्यां गणेशपूजनमाहात्म्यकीर्त्तनं। तस्य पूजनविधिकथनं। मथ्यमानात् समुद्रात् चन्द्रादीनामुद्भवकथनादिकं।

१२—१४ अध्याये,—समुद्रात् लक्ष्म्या उत्पत्तिकथनादिकं। अमृतपरिवेशनकाले विष्णोः मोहिनीरूपधारणादिकथनं। सुरासुरयोः युद्धवर्णनं। राहुं पुरस्कृत्य दैत्यानां जयलाभकथनं। राहुभयेन चन्द्रस्य शिवसान्निध्यगमनादिकथनं। विष्णुकृतकालनेमिवधवर्णनादिकं। युद्धहतानां सर्व्वेषां प्राणिनां स्वर्गफलप्राप्तिकथनं। इन्द्रेण सह बृहस्पतेः विरोधकथनं। विश्वकर्म्मसुतस्य विश्वरूपस्य इन्द्रपौरोहित्यकरणविवरणकथनं। अथैकदा शक्रः वज्रेण विश्वरूपस्य शिरांसि चिच्छेद। ततश्च येन मुखेन विश्वरूपः सोमपानमकरोत् ततः कपिञ्जलाः समजायन्त। तथा सुरापानमुखाच्च कलविङ्कतित्तिरिप्रभृतीनामुत्पत्तिकथनञ्च।

१५—१९ अध्याये.—देवाना नहुषाय स्वाराज्यदानविवरणकथनं। पुत्रविरहविधुरस्य त्वष्टुः ब्रह्मवरदानेन वृत्रासुरस्य उद्भवादिकथन। दधीचेरस्थ्यादिना अस्त्रादिनिर्म्माणकथनं। देवान् प्रति दधीचिपत्न्याः सुवर्चायाः शापदानकथनं। तद्गर्भात् पिप्पलादस्य उत्पत्तिकथनं। वृत्रासुरवधकथनमनु प्रदोषशिवव्रतविधिकथनं। बलिकृतामरावतीरोधवृत्तान्तकीर्त्तनं। इन्द्रसोमवह्निप्रभृतीनां मयूरकाक-कृकलासादिरूपेण पलायनविवरणकथन। वामनावतारकथन। बलिच्छलनवृत्तान्तकीर्त्तन। बलेः पातालगमनकथनं।

२०—२५ अध्याये,—ब्रह्मविष्णुरुद्राणां सगुणत्वनिरूपणपूर्व्वकं लिङ्गरूपस्य भगवतः निर्गुणत्वादिकथनं। नमुचिपुत्रेण तारकेण उपद्रुतानां देवानां द्रुहिणसमीपगमनपूर्व्वक स्तोत्रव्याजेन स्वावस्थावर्णन। दाक्षायण्या गिरिराजकन्यात्वेन जन्मग्रहणादिकथनं। पार्व्वत्याः शिवशुश्रूषणं। मदनदाहनविवरणकथन। रत्या सह नारदस्य संवादकथनं। पार्व्वत्यास्तपस्यादिवर्णनं। वटुरूपस्य शिवस्य तत्सन्निधौ गमनादिकथनं। अतिविस्तरेण शिवविवाहमहोत्सववर्णन। चण्ड्या आविर्भावादिकथनञ्च।

२६—३१ अध्याये,—गन्धमादनपर्व्वते शिवाशिवयोः विहारवर्णन। देवानामनुरोधेन वह्नेः हंसरूपेण तत्र गमनादिविवरणकथनं। कार्त्तिकेयस्य जन्मादिकथन। कुमारस्य सेनापतित्वे वरणादिकथन। तारकेण सह घोरयुद्धवर्णन। कुमारविजयकथनञ्च। यमकृतशङ्करस्तोत्रकथनं। कार्त्तिकदर्शनादिमाहात्म्यकथनं। यमेन जिज्ञासितस्य शिवस्य ज्ञानयोगस्वरूपादिकथनं। सुरनागकिन्नरादिकृतकुमारस्तोत्रकीर्त्तनं। कुमारेण सह नन्दिनः संवादेन शिवालयनिर्म्माणादिमाहात्म्यकीर्त्तनं।

३२ अध्याये.—शिवभक्तस्य श्वेतराजस्य उपाख्यानकीर्त्तनं। शिवरात्रिव्रतमाहात्म्यकथनप्रसङ्गेन चण्डाभिधानस्य पुक्कसस्य विवरणकथन। शिवगणेश नागराजकुमार-रविप्रभृतीनां देवानां प्रियतिथ्यादिनिरूपणं। एकदा पार्व्वत्या द्यूते पराजितस्य शिवस्य भूषणमोषेण कौपीनग्रहणेन नग्नीकरणञ्चेतिरहस्यवर्णनं। अथ विरक्तस्य शिवस्य कैलासं विहाय वनप्रवेशविवरणकथन। ततः पार्व्वत्याः शवरीरूपमाकलय्य शिवसान्निध्यगमनकथनं। तयोर्देवगणकृताभिषेकवर्णनञ्च। केदारखण्डपाठादिफलश्रुतिकथनञ्च। इति।

---

**No. 2110. नामकौमुदी।** Substance, country-made paper, 13 × 4 inches. Folia, 82. Lines, 6 on a page. Extent, 1,154 ślokas. Character, Bengali. Date, Sk. 1602. Place of deposit, Purohitapáḍá, Ránágháṭ, Paṇḍit Rámalála Bandyopadhyáya. Appearance, old. Prose and verse. Correct.

**Náma-kaumudí.** A treatise on faith in Krishna as the supreme divinity, and the rituals and duties of Vaishṇavas. By Gaṅgádhara, son of Siva Bhaṭṭa, and grandson of Vireśvara Bhaṭṭa Mábáṅkara.

**Beginning** नमस्कृत्य रमानाथं करुणावरुणालयं।
सदाशिवतनूजन्मा वत्सर्षिकुलसम्भवः ॥
गङ्गाधर इतिख्यातो भगवद्भक्तकिङ्करः।
शास्त्रसारं समालोक्य मनोनियहहेतवे ॥
अपवर्गफलां रम्यां हरिपादपरायणां।
उक्तियुक्तिविशेषेण कुर्व्वेऽहं नामकौमुदीं ॥
तत्र ब्रह्मसंहितायां।
ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः। इत्यादि।

**End.** तस्मात् भगवन्नामोच्चारणमात्रेणैव जीवानां चतुर्व्वर्गप्राप्तिरवश्येति दिक्।

**Colophon.** इति श्रीमन्महाउकरोपनामकवीरेश्वरभट्टाग्निहोत्रिसूरिसूनुसदाशिवभट्टात्मजभगवद्भक्तकिङ्करगङ्गाधरविरचिता नामकौमुदी समाप्ता। शकाब्दाः। १६०१।

विषयः। श्रीकृष्णस्य स्वयं भगवत्त्वनिरूपणं। तस्य पूर्णनिर्णयः। विविधप्रमाणोपन्यासेन श्रीकृष्णतत्त्वनिरूपणं। नामसंकीर्तनप्रकटाप्रकटलीलाव्यवस्थाकीर्त्तनं। कृष्णनामवहिर्मुखानां निन्दाकथनं। दशविधभक्तिलक्षणं। गुर्व्वाश्रयविवेककथनं। महाभागवतप्रसङ्गकीर्त्तनं। श्रवणकीर्त्तनादिषु नामसंकीर्त्तनस्यैव प्राधान्यमितिनिरूपणं। नामापराधविवेचनं। भगवत्यव सर्व्वेषां शास्त्राणां तात्पर्य्यमितिप्रपञ्चनं। भगवल्लक्षणकथनादिकं। संक्षेपेण श्रीमद्भागवततात्पर्य्यकथनं। नामसंकीर्त्तनेनैव जीवानां चतुर्व्वर्गप्राप्तिरितिकीर्त्तनञ्च।

---

**No. 2111** **निर्व्वाणप्रकरणम्।** Substance, country-made paper, 7×4 inches. Folia, 3. Lines, 5 on a page. Extent, 58 Ślokas. Character, Bengali. Date, ? Place of deposit, Purohitapáḍá, Ránághát, Paṇḍit Rámaláḷa Bandyopádhyáya. Appearance, fresh. Verse. Correct.

**Nirváṇa-prakaraṇa.** Eight stanzas on the unreality of the universe, as inculcated in the Vedánta philosophy. By S'uka, son of Vyása.

श्रीशुकाचार्य्य उवाच।

**Beginning** भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे
मायामोहौ स्वयमधिगतौ नष्टसन्देहवृत्तिः।
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं
निस्त्रैगुण्ये पथि विहरतां को विधिः को निषेधः ॥ इत्यादि।

**End.** सत्यं सत्यं परममसृत शान्तिकल्याणरूपं
मायारण्ये दहनदशं शान्तिकल्याणदीपं।

तेजोरूपं निगमसदनं व्यासपुत्राष्टकं यः
प्रात. काले पठति मनसा याति निर्व्वाणमार्गं ॥

Colophon. इति श्रीशुकाचार्य्यविरचितं निर्व्वाणप्रकरणं सम्पूर्णं ।

विषयः । निर्व्वाणस्वरूपकथनपूर्व्वकं तदुपायकीर्त्तनं ।

---

**No. 2112. आर्षानुक्रमणी ।** Substance, country-made paper, 8 × 4 inches. Folia, 22. Lines, 7 on a page. Extent, 320 ślokas Character, Nágara. Date, Sm. 1820. Place of deposit, Sántipur, Paṇḍit Káhdása Vidyávagís'a. Appearance, fresh. P.ose. Correct.

**A'rshánukramaṇí.** Index to the Rishis who are supposed to be the authors of the Rig Vedic hymns. By Saunaka.

आर्षानुक्रमणी लिख्यते ।

Beginning. ॐ ऋग्वेदसंखिलं ये हि द्रष्टारो मुनिपुङ्गवाः ।
तदनुक्रमणायाहं नमामि परमेश्वरीम् ॥
अथाग्निमील इत्यादि प्रथम मण्डलं प्रति ।
शतर्च्चिनस्तु विज्ञेया ऋषयः सुखसिद्धये ॥
तेषां पूर्व्वो मधुच्छन्दा मेधातिथिरनन्तरः ।
शुनःशेफस्ततोपि च हिरण्यस्तूप उत्तरः ॥ इत्यादि ।

End. ये वेदमन्त्राः सकलाः सुदृष्टा येनार्षानुक्रमणी प्रदिष्टा ।
नमोऽस्तु तेभ्यो मुनिपुङ्गवेभ्यो भवन्तु ते चापि मयि प्रसन्नाः ॥

Colohpon. इति शौनकाचार्य्यकृतार्षानुक्रमणी समाप्ता । सवत् १८२० ।

विषयः । ऋग्वेदसंहितोक्तमन्त्राणामृषिनिरूपणं ।

---

**No. 2113. रासोल्लासतन्त्रे रासगीतिका ।** Substance, count-y-made paper, 8 × 4 inches. Folia, 13. Lines, 7 on a page. Extent, 137 ślokas Character, Nágara. Date, ? Place of deposit, S'ántipur, Paṇḍit Káhdása Vidyávagísa. Appearance, new. Prose. Correct.

**Rása-gítá.** A poem in praise of the Rása festival of Krishṇa and Rádhá. It professes to be an extract from the Rásollása Tantra.

श्रीनारद उवाच ।

Beginning. श्रीराधाकृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ।
रासमङ्कीर्त्तनं नाम शृणु भागवतोत्तम ॥

राधानामसुधाख्यं कृष्णनामरसायनम् ।
" यः पठेत् प्रातरुत्थाय व्याधिभिः स न बध्यते ॥ इत्यादि ।

End. लक्ष्मीस्तस्य वसेद्गेहे मुखे भाति सरस्वती ।
धर्मार्थकामकैवल्यं लभते सत्यमेव च ॥

Colophon. इति श्रीराधेोल्लासतन्त्रे रासगीतिका सम्पूर्णा ।

विषयः । राधाकृष्णयोः रासोत्सवकालीनस्तोत्रकथनं ।

---

**No. 2114.** सर्व्वानुक्रमणिका । Substance, country-made paper, 10 × 3 inches. Folia, 37. Lines, 7 on a page. Extent, 630 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipur, Paṇdit Kálidása Vidyávágís'a. Appearance, fresh. Prose. Correct.

**Sarvánukramaṇiká.** An index to the Rishis, the Devas and the metres of the hymns of the Vájasaneyi Sañhitá of the Yayur Veda. By Kátyáyana.

**Beginning.** ॐ मण्डलं दक्षिणमक्षि हृदयं चाधिष्ठितं येन शुक्लानि यजूंषि भगवान् याज्ञवल्क्यो यतः प्राप तं विवस्वन्तं नत्वैतस्यर्षिमृमनमभिध्याय माध्यन्दिनीये वाजसनेयके यजुर्वेदाम्नाये सर्व्वे सखिले सशुक्रिये ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामोयजुषामनियताक्षरत्वाद्देकेषां छन्दो न विद्यते । इष्टार ऋषयः स्मर्त्तारः परमेष्ठ्यादयो देवता मन्त्रान्तर्भूता च्यग्न्यादिकाः प्रालो-श्यामस्योपदेषकपालेष्वालूखलादयश्च पतिमाभूतान्छन्दांसि गायत्र्यादीन्येतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोतीत्यादि ।

**End.** षड्दृका वा मन्त्रार्त्विज्माध्यन्दिनीये वाजसनेयके सर्व्वानुक्रमणिकैषा कृतिर्भगवतः कात्यायनस्यैषाकृतिर्भगवतः कात्यायनस्य । च ।

**Colophon.** इति सर्व्वानुक्रमणिकायां पञ्चमोऽध्यायः समाप्तः । समाप्ता चेयं सर्व्वानुक्रमणिका ।

विषयः । सर्व्वेषां माध्यन्दिनयजुर्मन्त्राणाम् ऋषिदैवतनिरूपणं । क्वचित् छन्दआदिकथनञ्च ।

---

**No. 2115.** विदग्धमण्डनम् । Substance, country-made paper, 12 × 4 inches. Folia, 102. Lines, 6 on a page. Extent, 1,969 ślokas. Character, Nágara. Date, Sm. 1889. Place of deposit, S'ántipur, Paṇdit Kálidása Vidyávágís'a. Appearance, fresh. Prose. Generally correct.

**Vidvanmaṇḍana** An essay in refutation of the doctrine of Máyá. It attempts to prove that the human soul is not a mere reflection of the Divine soul, but an actual emanation from the Divinity, and that Krishṇa is the perfection of the Divinity. It represents the philosophy of the Vaishṇavas in a condensed form. By Viṭṭhala Díkshita, son of Vallabha Díkshita.

**Beginning.** निजमुरलिकानादाकृष्टानागतव्रजसुन्दरी-
निरुपमनखक्षेत्रदाम्भोधेर्विचित्रतरोर्म्मिभिः।
किमपि परितश्चाद्रार्द्रोऽस्तु प्रभुः प्रकटीभवन्
प्रतियुवतिसम्भेदेनास्मद्दृशां विषयः सदा॥
पितृचरणाम्नत्वाहं हरिरतिमार्गाम्बुजातमार्त्तण्डान्।
तदनुग्रहतः किञ्चिल्लिखामि यत्नाद् यथाबुद्धि॥
श्रुतिसूत्रादिमणिभिर्जटिलं युक्तिमौक्तिकैः।
ग्रथितं कुरुते विद्वन्मण्डनं विट्ठलः सुधीः॥

इह हि विविधदुर्जिनतापोपतप्यमाननिखिलजनापवर्गाय श्रुतिस्मृतिपुराणेषु श्रवणादयः प्रतिपाद्यन्ते। इत्यादि।

**End.** पुनरपि नमामि गोपीपतिरतिमार्गप्रवर्त्तनाचार्य्यान्।
श्रीवल्लभाभिधानान् पितृचरणान् वाङ्मनःकायैः॥

**Colophon.** इति श्रीमन्निजकटाक्षपाततरणिविघटितमायावादिप्रभृतिप्रतिवादितमः-पुञ्जविकाशितश्रीगोकुलाधीशरसि+श्रीवल्लभदीक्षितात्मजश्रीगोकुलनाथचरणैकतानश्रीविट्ठलविर-चितं विद्वन्मण्डनं सम्पूर्णं॥ संवत्। १८८९।

विषयः। प्रकरणेऽस्मिन् मायावादादिखण्डनपूर्व्वकं विष्णुस्वामिमतेन शुद्धाद्वैतवादोपपा-दनं। एतन्मते हि जीवपरमेश्वरयोर्जलविन्दुजलाशययोरिव अंशांशिभावः। सर्व्वमिदं जगत् श्रीकृष्णादाविर्भवति तमेव लूतातन्तुरिव अप्येति च। मायिकगुणरहितः परमेश्वरः श्रीकृष्ण एव भगवानुपास्यदेवः। एतस्यैवोपासनया आनन्दाविर्भावान्मोक्षदशायां जीवः श्रीकृष्ण एव जलविन्दु-र्जलाशय इव अभेदमापद्यते—इति। अत्र श्रीकृष्णलीलायाः प्रयोजनादिकीर्त्तनं लीलायाः नित्य-त्वादिनिरूपणञ्च।

---

**No. 2116.** मलमासतत्त्वटीका। Substance, country-made paper, 16 x 4 inches. Folia, 142. Lines, 7 on a page. Extent, 4,626 ślokas. Character, Bengali. Date, ? Place of deposit, Májitá, Post Ráṇághát, Paṇḍit Madhusúdana Nyáyaratna. Appearance, fresh. Prose. Correct.

**Malamásatattva-ṭíká.** A commentary on the Malamásatattva of Raghunandana; on intercallary months. By Rádhámohana Gos'vamí.

**Beginning.** प्रणम्य राधानलिनीमुभृङ्गमङ्गं घनश्याममलमच्युतस्य ।

परं चिदानन्दमयं तनोति श्रीमोहनोऽर्थं मलमासतत्त्वे ॥

ग्रन्थसमाप्तिप्रतिकूलविघ्नविनाशाय परमेश्वरप्रणतिरूपमङ्गलं कुर्व्वन् शिष्यशिक्षायै तदुपनिबन्धनं कृत्वा शिष्यावधानाय प्रतिजानीते प्रणम्येति । स्मृतेस्तत्त्वेति स्मृतिवाक्यस्य तत्त्वमर्थविशेषं । मलिम्लुच इत्यादेस्तत्त्वं वक्ष्यामीति परेणान्वयः । इत्यादि ।

**End.** तस्य मत्यामपि चैत्रादिसंज्ञायां चैत्रादिमासविहितकर्म्मानर्हतया तत्तन्नामकत्वरूपमन्यथा मलस्यापि द्विचैत्रादिपदप्रयोगानुपपत्तेरिति ॥

**Colophon.** इति श्रीमदद्वैतवंशोद्भवश्रीराधामोहनगोस्वामिभट्टाचार्य्यविरचिता मलमासतत्त्वटीका समाप्ता ।

विषयः । रघुनन्दनकृतमलमासतत्त्वस्य व्याख्यानं ॥

---

**No. 2117.** उद्वाहतत्त्वटीका । Substance, country-made paper, 16 × 4 inches. Folia, 95. Lines, 7 on page. Extent, 2,161 ślokas. Character, Bengali Date, ? Place of deposit, Májdá, Post Ránághaṭa, Paṇdit Madhusudana Nyáyaratna. Appearance, fresh. Prose. Correct.

**Udváhatattva-ṭíká.** A commentary on Raghunandana's digest of the laws relating to marriage. By Kás iráma Váchaspati Bhaṭṭáchárya.

**Beginning.** नत्वा गुरोश्चरणपद्मरजांसि मूर्द्ध्नि

श्रीकामकामचरणञ्च निधाय चित्ते ।

श्रीकाशिरामसुकृती कृतिनां हिताय

सम्बन्धतत्त्वविवृतिं वितनोति यत्नात् ॥

स्मृतिशास्त्राम्बुधौ स्त्रीलीकृतसेतुं जगद्गुरुं ।

विदितं विष्णु लोकेषु नमामि रघुनन्दनं ॥

स्वकर्त्तव्यग्रन्थसमाप्तिप्रतिबन्धकविघ्नसम्भावनास्ति । अतः सम्भावितताद्दृशविघ्नविनाशार्थं ग्रन्थकारः परमेश्वरप्रणामरूपं मङ्गलं कृतवान् । तच्च शिष्यशिक्षार्थमादौ निबध्नाति प्रणम्येति । वाग्रूपस्य ग्रन्थस्य समाप्त्यर्थं वागीशस्य प्रणाम उचित इति सूचनार्थं वागीशमिति विशेषणमुपात्तं ।

**End.** अप्रजाः शूद्रादनुत्पन्नगर्भा । इतराः न शुध्यन्तीति ।

यं प्रासूत समस्तशास्त्रनिपुणः श्रीरामकृष्णात्मजः

श्रीराधेशपदवल्लभाक्षुलसी सद्वीरचूडामणिः ।
तेन श्रीयुतकाशिरामकृतिना यत्नेन निष्पादिता
टीका नातिसुविस्तृतापि कृतिभिः सामुपस्थैर्ध्यतां ॥

**Colophon.** इति श्रीकाशीरामवाचस्पतिभट्टाचार्य्यविरचिता उद्वाहतत्त्वटीका समाप्ता ।

विषयः । रघुनन्दनकृतोद्वाहतत्त्वस्य व्याख्यानं ।

---

**No. 2118 देवीपुराणम् ।** Substance, country-made paper, 11 × 4 inches. Folia, 182. Lines, 8—9 on a page. Extent, 7,371 ślokas. Character, Bengali. Date, ? Place of deposit, Ránághát, Babu Surendranátha Pála Chaudhurí. Appearance, old. Verse. Incorrect.

**Deví Purána.** Legends and traditions regarding the Deví and her wars, designed so as to glorify the Deví, and exalt her as the greatest divinity. It professes to have been imparted by Brahmá himself at the request of an assembly of Rishis. The S'áktas insist that this is an original Purána, and one of the eighteen alleged to have been compiled by Vyása; but the Vaishnávas denounce it as apocryphal, got up with a view to set aside the claims of the Bhágavata Purána. Dr. Wilson, in the introduction to his translation of the Vishnu Purána has noticed at length the arguments urged by the two sects. The codex is incomplete.

CONTENTS: 1—2. Introduction, Rishis repair to the hermitage of Agastya by the advice of Vaśishtha. Story of Nripaváhana and Chitráñgada. Ghora, an Asura, attains absolute invincibility on earth through the blessings of Vishnu. Vaśishtha advises Ghora how to obtain the nature of a Vidyádhara.

3 to 6. Conquest of Pátála by Kála, son of Ghora. Conquest by him of the kingdom of heaven from Indra and the other gods. The gods seek the aid of the Deví, and address her hymns.

7 to 9. The Deví descends on the Vindhya mountain. Nárada descends to delude the demon. The demon proposes to marry the Deví. Selection of brides. Mantras for deluding people.

10 to 13. Description of Sanatkumára Yoga. Story of Hutágni, a demon. Story of Surala, who obtains an invincible standard. Descriptions of standards.

14 to 21. Ghora sees a frightful dream. The Deví, under the name of Vindhyavásini, destroys Korakála and other demons. Indra praises the Deví.

22 to 29. Durgápújá. Planting of standards. Transit of the sun from one to another month. Worship of the Deví at such times and on other occasions.

30 to 33. Agency of the Deví in the creation of the universe. Her superiority over Brahmá, Vishnu and Mahádeva, who attain their greatness and strength through her. Her worship. Her car festival. Her worship on cremation ground on particular occasions.

34 to 38. Details about her worship, her temples, offerings to her, &c. Hymns in her praise.

39 to 43. Further details. Story of Bala. Do. Dundubhi. Worship of Kshemaṅkarí.

44 to 48. Aparájitá-vidyá. Story of Amayásura. Names of Rudras, Vasus, Viśvedevas, &c. Conjunctions of Nakshatras. Deví worshipped by Paras'uráma. Astronomical and astrological details in connection with her worship.

49 to 53. Further astronomical details and special rules about her worship.

54 to 70. Special worship of the Deví and her manifestations as Mátrikás on particular occasions, and also of S'iva in connexion with her.

71 to 80. Worship of Vináyaka. Character of forts, gates, triumphal arches, &c. Bathing during eclipses. Merit of pouring water on Lingams. Rites, fasts and sacrifices in honour of the Deví.

81 to 89. Merit of cleaning the temple of the Deví. Her omnipresence. Periods of existence of Brahmá and others. Praise of Kálágnirudra. Description of Háṭakes'varapura. Story of the demon Kuru. Origin of Bhimá. Do. of the signs of the planets. Do. of Chaṇḍeśvara. Praise of the Deví on the destruction of Kuru.

91 to 96. The fasts of the 8th and of the 9th lunations in Áśvina. Worship of the Mátris. Advantage of worshipping clay images. Praise of W[illegible]á, and her worship. Praise of Nanda, a place sacred to the Deví.

97 to 103. Duties of the different orders, classes and castes. Various fasts.

104 to 114. Various fasts. Origin, classification and division of the Vedas. The subsidiary Vedas. Science of medicine. Qualities of drugs. Story of Khaṭṭásura. Birth of Gaṇeśa.

115 to 128. Hymn to Gaṇeśa by Vishṇu. Lustration of Gaṇeśa

and blessings by him on Vishṇu. Story of Vighna, his destruction by Ganesa. Praise and worship of the Mátrikás. Story of Harischandra. Repairs of images of gods. Controul of the passions. Story of Naraváhana. Rules regarding Triragni. Names of Agni under different conditions. Flowers meet for worship. Worship of spiritual guides. Hymn in praise of the Deví.

Beginning. नमस्कृत्य शिवां देवीं सर्व्वभागवतां शुभाम् ।
पुराणं संप्रवक्ष्यामि यथोक्तं ब्रह्मणा पुरा ॥
ऋषय ऊचुः ।
भगवंस्त्वं समस्तस्य दृष्टादृष्टस्य तत्त्ववित् ।
पुराणार्थं वयं सर्व्वे आगता भवि भाविताः ॥
कथ्यतां यत्र घोराद्या भूताः साम्प्रतदानवाः ।
भविष्यांश्च विनाशिष्ये देवी देवनमस्कृता ॥
इन्द्रस्य च दिवः प्राप्तिर्हृतराज्यस्य दानवैः ।
यथा शक्राच्छ्रियं चक्रे देवदेवनमस्कृतः ।
अवतारा मुनिश्रेष्ठ षष्टिभेदगता यथा ॥ इत्यादि ।

End. मयापि कथितं तुभ्यं निरुक्तं पापनाशनम् ।
पुराणं पावनं दिव्यं देवदेवेन भाषितम् ॥

Colophon. इत्याद्ये देवीपुराणे देवदेवीसंवादे देव्याः स्तवराजः समाप्तः ॥ १२८ अध्यायः ।

विषयः । १—२ अध्याये,—वसिष्ठस्योपदेशेन ऋषीणामगस्त्याश्रमगमनविवरणकथनं । नृपवाहनचिचाङ्गदयोरुपाख्यानकथनं । घोराभिधानस्य दैत्येन्द्रस्य विष्णुपामनया पृथिव्यामजेयत्ववरप्राप्तिकथनं । अगस्त्येन सह नृपवाहनस्य संवादे केनोपायेन विद्याधरत्वप्राप्तिर्भवति तदुपायकथनं ।

३—६ अध्याये.—घोरपुत्रस्य कालस्य वज्रदण्डस्य च भगवदाराधनया देववरयोः पातालादिविजयवर्णनं । शुक्रस्योपदेशेन तयोरिन्द्रादिपराजयसम्पादनपूर्व्वकं स्वाराज्यैश्वर्यप्राप्तिकथनं । घोरपुत्रविप्रकृतानां देवानां ब्रह्ममुखेन देवीस्तोत्रकीर्त्तनं । एवं विष्णुरुद्रादिकृतदेवीस्तोत्रकथनं ।

७—९ अध्याये,—देव्याविन्ध्यावतरणविवरणकथनं । ब्रह्मण उपदेशेन घोरनामकदैत्यमोहनार्थं नारदस्य गमनवृत्तान्तकथनं । प्रलोभनमुग्धस्य दैत्यराजस्य विन्ध्यवासिनीं पत्नीत्वेन लब्धुं

चेष्टादिकथनं। अत्र विवाहयोग्यकन्यालक्षणादिकथनञ्च। लोकमोहनपदमालाकथनप्रसङ्गेन मन्त्रादिकथनं।

१०—१३ अध्याये,—उक्तविद्यालाभाय सनत्कुमारयोगानुष्ठानप्रकारकथनं। तत्र कृताग्निनामकस्य दानवस्य विवरणकथनं। सुरलेनाभिधेयस्य दैत्येन्द्रस्य विवरणकथनं। तस्य विष्णोः शवना मानकेतुलाभकथनं। केतुममुच्छ्रायविधिकथनं। इन्द्रध्वजलक्षणादिकथनं।

१४—२१ अध्याये,—आसन्नमृत्योर्दैत्येन्द्रस्य घोरस्य दुःस्वप्नदर्शनकथनं। विन्ध्यवासिनीकृत घोरकालादिदैत्यवधवर्णनं। इन्द्रकृतदेवीस्तोत्रकीर्त्तनं। नारदस्य विन्ध्यवासिनीदर्शनेन स्तवकीर्त्तन। सुषेणवधकथनं। मायासैन्यवधकथनञ्च।

२२—२९ अध्याये,—आश्विनशुक्लाष्टमीमहानवम्योर्देवीपूजावश्यकताकथन। नवमीकल्पविधिकथनं। अत्र दुर्गापूजाविधिकथनञ्च। ध्वजारोपणविधिकथनं। द्वादशसङ्क्रान्तिलक्षणकथनपूर्व्वकं तत्र तत्र कृत्यनिरूपणं। प्रदोषादौ सङ्क्रमणे फलादिकथनञ्च। वसोर्द्धारायां स्थितायां देव्याः पूजने फलाधिक्यकथनं। वसुधारादानयोग्यस्थानादिनिरूपणं। होमविधिकथनप्रसङ्गेन कुण्डनिर्म्माणादिविधिकथनं। विशेषेण देवीमाहात्म्यकथनं। देवीमाहात्म्यपाठादिविधिकीर्त्तनञ्च।

३०—३३ अध्याये,—देव्याः प्रकृतिरूपत्वेन जगत्कर्त्तृत्वादिकथनं। तस्याः परत्वादिनिरूपणञ्च। हरिहरादीनां सर्व्वेषां देवीपूजनेन सामर्थ्यप्राप्तिकथनं। तत्र देवभेदेन देव्या हेमस्फटिकादिमूर्त्तिभेदपूजकचक्षुर्शुनं। देव्यारथयात्राविधिकथनं। कर्म्मविशेषे नदीतीरदुर्गारण्यश्मशानादिषु देव्याः पूजनकर्त्तव्यताकथनं। देव्याः प्रतिष्ठापनविधिकथन।

३४—३८ अध्याये,—शुक्रकृतशिवस्तोत्रकीर्त्तनं। तत्पुरतः शिवेन दुर्गाव्रतविधानादिकथनं। देव्याः गृहनिर्म्माणलेपनसंस्कारादिकरणे फलश्रुतिकथनं। देवीपूजनं कृत्वा कुमारीभ्योऽन्नादिदानकर्त्तव्यताकथनं। देवीप्रासादशिरसि ध्वजदानादिविधिकथन। गर्गेन शिवोक्तदेवीस्तोत्रकीर्त्तनं। सर्व्वमङ्गलाशिवादिदेवीनामनिर्व्वचनकथनं। अत्र सर्व्वेषां देव्यभिधानानां निरुक्तं ज्ञेयं।

३९—४३ अध्याये,—महादेवीनां स्थाननिरूपणं। स्थानभेदे देवदेवेन देव्या मूर्त्तिविशेषपूजनविवरणकथनं। देवीमन्त्रप्रभावकथनमुखेन दैत्यराजस्य बलस्य वृत्तान्तकीर्त्तनं। दुन्दुभिनामकस्य दैत्येन्द्रस्य उपाख्यानकथनं। चमत्कार्य्या आविर्भावकथनं। तस्याः पूजाविधिकथनं। घर्मासुरवधवृत्तान्तकथनं। कामरूपादिदेवीस्थानप्रशंसादिकीर्त्तनं।

४४—४८ अध्याये,—महादेवात् नन्दिन अपराजिताविद्याप्राप्तिकथनं। अमयासुरस्य विवरणकथनं। एकादशरुद्राष्टवसुद्वादशादित्यविश्वेदेवादीनां नामकथनं। नक्षत्रयोगमाहात्म्यकथनं। परशुरामकृतदेवीप्रतिष्ठाविधिकथनं। महायागानुष्ठानयोग्यतिथ्यादिनिरूपणं कालव्यवस्थाकथनमुखेन तिथ्यादिलक्षणकथनं। ज्योतिश्चक्रसंस्थानादिकथनं। ग्रहाणां गत्यादिनिरूपणं।

४९—५१ अध्याये,—पूर्णिमामावस्यानिरूपणमुखेन चन्द्रग्रहादिनिरूपणं। सूर्य्याचन्द्रमसो-रुपरागे छायारूपराहुकारणत्वकथनं। ग्रहणनिरूपणादिकथनं। संवत्सरं यावत् जन्मर्क्षदोषाप-नुत्तये ग्रहनक्षत्रादिभेदेन देव्या मूर्त्तिभेदपूजनविधिकथनं। तत्र मण्डलतोरणादिनिर्म्माणविधि-कथनं। महास्नानविधिः शिवा-शान्ति-धृति-क्षमा-ऋद्धि-सिद्धि-तुष्टि-प्रभृतिषड्विधदेवीमूर्त्ति-लक्षणकथनं। तथा ब्राह्मयादिमातृकालक्षणकीर्त्तनञ्च। आसां पूजाविधिकथनं। ग्रहाधिष्ठात्रीणां देवतानां लक्षणादिकथनं। संवत्सरमण्डलकथनं। तत्र तत्र बलिदानादिविधिकथनञ्च।

५४—६४ अध्याये,—मातृमण्डलकथनं। तत्र तत्र पूजायां पात्रपुष्पादिनिरूपणं। अपमृत्यु-हरणादित्ययोगकथनं। ग्रहणमातृकाविधिकथनं। तत्र होमविधिकथनञ्च। महोत्पातस्वरूपकथ-नपूर्व्वकं सर्व्वोत्पातशान्तिविधिकथनं। पूर्णिमादौ तिलधेन्वादिदानविधिकथनं। सौभाग्यद्वादशी-व्रतविधानं। द्वादशमासेषु क्रमेण देव्याः पूजाविधिकथनं। काम्यनीलवृषोत्सर्गविधिकीर्त्तनं। गन्धाष्टमीक्षीराष्टमीप्रभृतीनां विधानकथनं। सर्व्वकामलाभार्थं चित्रादिषु नक्षत्रेषु देव्याः पूजा-विधिकथनं।

६५—७० अध्याये,—मासविशेषे पूजाविशेषेण देव्याः पूजाविधिकथनं। वाराणसी-प्रयाग-नैमिषारण्यादिषु स्थानेषु शिवस्य रूपभेदेन अवस्थानकथनं अतएव अष्टषष्टिस्थानेषु तत्पूजन-विधानकथनञ्च। गोरत्नव्रतविधिकथनं। पुष्याभिषेकविधिः। तत्र मण्डलादिनिर्म्माणविधानक-थनं। कलसोत्पत्ति-निवेशाधिदेवतालक्षणादिकथनं।

७१—८० अध्याये,—विनायकमण्डलविधिकथनं। पूजनस्नपनादिविधिकीर्त्तनञ्च। दुर्गगो-पुरद्वारादिलक्षणं। पुरदुर्गयात्रादिविधिकथनं। पुण्यनद्यादिषु स्नाने ग्रहणकालीनस्नानजन्यपुण्य-प्राप्तिकथनं। शिवादिशिरसि जलादिधारादानमाहात्म्यकथन। मृत्युञ्जयविद्याकथनं तत्र कपोतकीर्त्तनाध्यायकीर्त्तनं। देवीयागविधिकथनं। अयाचितव्रतविधिकथनं। कृष्णाष्टमीव्रतवि-धिः। उमामाहेश्वरव्रतविधिकथनं। शङ्करनारायणव्रतविधिकथनं। लक्ष्मपर्णव्रतविधानकथनञ्च।

८१—८९ अध्याये,—देवीगृहसम्मार्ज्जनमाहात्म्यम्। देव्याः सर्व्वगतत्वादिनिरूपणं। ब्रह्मा-दीनां कालव्यवस्थाकथनं। भावव्यवस्थाकथनञ्च। कालाग्निरुद्रमाहात्म्यकथन। हाटकेश्वरपरवर्णनं। अथैकदा गौरीशङ्करं द्रष्टुकामा विधिवासवादयः स्वस्ववाहनेन कैलासं समाययुः। अत्र पैं कौमा-रवर्हिणा समाहतस्य ब्रह्मवाहनस्य हंसस्य विरावेण रुरुनामकस्य असुरस्य उत्पत्तिकथनं। तदु-पद्रुतानां देवानां देवीस्तोत्रकीर्त्तनं। रुरुवधकाले ब्रह्माण्या उत्पत्तिकथन। भीमाया उत्पत्तिकथनं। महोत्पत्तिकथनं। षण्ढस्वरोत्पत्तिकथनं। रुरुवधे देवगणकृतदेवीस्तोत्रकीर्त्तनं।

९१—९६ अध्याये,—देव्यष्टमीव्रतकथनं। देवीनवमीव्रतकथनं। मातृगणस्य प्रतिष्ठादिवि-धिकथनं। स्वायप्रतिमापूजनमाहात्म्यकथनं। विद्यागममाहात्म्यकथनं। विद्याविवेकमाहात्म्यं। विद्याविमामादिविधिकथनं। विद्यामूर्त्तिदानफलकीर्त्तनं। देव्याः प्रियस्थानवर्णन। नन्दातीर्थ-माहात्म्यकथनं। नन्दापरीवर्त्तनादिकं। सुनन्दामाहात्म्यकथनमुखेन तत्परीवर्त्तनादिकं। तत्र प्रवेशविधिकथनं। कनकनन्दामाहात्म्यादिकथनं।

९७—१०३ अध्याये,—वर्णाश्रमधर्म्मकथनं। तत्र स्वाध्यायविधिकथनं। वेदपाठस्थानादि-निरूपणं। अग्निहोत्रादिविधिकथनं। वैधातिरिक्तस्थले हिंसायाः पापजनकत्वकथनं। सामान्यतः सर्व्ववर्णाश्रमधर्म्मकथने निषिद्धानि। आचारकथनं। पवित्रारोपणविधिकथनं। मासविशेषे द्रव्य-विशेषेण देवीपूजनमाहात्म्यकथनं। विजयाव्रतविधिकीर्त्तनं। रूपसौभाग्यजनकनन्दाव्रतविधि-कथनं। अन्यविधविजयाव्रतविधिः। नक्षत्रव्रतविधिकथनं।

१०४—११४ अध्याये,—तोयधेनुघृतधेनुतिलधेन्वादिदानविधिः। पद्मव्रतविधिकथनं। क्षेमगोव्रतविधिकथनं। मासविशेषे शय्यादिभेददानव्रतविधिः। वेदोत्पत्तिकथनं। चरणव्यूहकथनञ्च। षडङ्गनिरूपणं। आयुर्व्वेदोपोद्घातकथनं। शिष्यसम्बोधनप्रकारकथनं। आयुर्व्वेदनिरूपणमुखेन द्रव्यगुणादिकथनं। गजासुरोत्पत्तिकथनप्रसङ्गेन मालव्यपर्व्वते गजरूपस्य महादेवस्य भ्रमणविवरण-कथनं तत्र विनायकोत्पत्तिकथनञ्च।

११५—१२८ अध्याये,—विष्णुकृतविनायकस्तोत्रकीर्त्तनं। विनायकस्य अभिषेककथनं। वरदानवृत्तान्तकीर्त्तनञ्च। विनायकं पुरस्कृत्य विघ्ननाशाय देवानामुदयाचलगमनवृत्तान्तकथनं। विघ्नवधकथनमुखेन तस्य रूपादिवर्णनं। उत्पत्त्यादिकथनञ्च। मातृगणपूजामाहात्म्यकथनं। तत्र हरिश्चन्द्रचरणविवरणकीर्त्तनञ्च। जीर्णदेवमूर्त्तिप्रतीकारकथनं। यमनियमशुद्धिनिरूपणं। तत्र नरवाहनस्य शुक्लकथनं। त्रिरग्निविधिकथनं। कर्म्मविपाक वशेन नामभेदकथनं। पुष्पविधि-कथनं। गुरुदेवपूजाविधिः। देवीस्तवराजकथनञ्च।

---

**No. 2119.** वैष्णवामृतम्। Substance, country-made paper, 10 × 4 inches. Folia, 182. Lines, 6 on a page. Extent, 4,628 *ślokas*. Character, Bengali. Date, ? Place of deposit, Ránágháṭa, Bábu Surendranátha Pála Cnaudhúrí. Appearance, new. Prose and verse. Correct.

**Vaishṇavámṛita.** On the duties, feasts and fasts of Vaishṇavas. Anonymous.

**Beginning.** श्रीदामोदरपादपङ्कजयुगं नित्यं मुनीन्द्रैः स्तुतं
देवानामपिदुर्ल्लभं किमपरं धर्म्मार्थमुक्तिप्रदं।
संसारार्णवतारणार्थतरणी यत्कर्णधारः स्वयं
सानन्दं स्मरतो ममास्तु हृदये स्वाभीष्टसिद्ध्यै सदा॥
सारात्सारं समाहृत्य वैष्णवानां हिताय वै।
भक्तानां तोषणार्थञ्च वैष्णवामृतमुच्यते॥ इत्यादि।

**End.** अयं सिद्धमनुः सर्व्वपापानां हारकः क्षणात्।

निर्म्मलं गगनं यद्वत् कालुष्यं न हि तस्य च ॥

इति हयशीर्षसंहितीयवचनात् सर्व्वमवदातं ।

**Colophon.** इति श्रीवैष्णवामृते श्रीविष्णोर्द्वादशयात्राविधिः ॥ समाप्तञ्चेदं वैष्णवामृतं ।

विषयः । वैष्णवधर्म्मप्रशंसाकीर्त्तनं । सर्व्वधर्म्मान् परित्यज्य वैष्णवधर्म्मग्रहणावश्यकताकथनं । वैष्णवगुरुलक्षणं । गुरुकरणावश्यकत्वनिरूपणं । शिष्यलक्षणादिकथनं । वैष्णवदीक्षायामधिकारिनिरूपणं । दीक्षाप्रकरणं । तत्र नक्षत्रराशिचक्रादिविचारकथनं । दीक्षाकालनिरूपणं । जपमालानिर्णयः । जपसंख्याकरणे विहिताविहितद्रव्यादिकथनं । वर्णमालाप्रकारः । मालानिर्णयादिकथनं । विष्णुपूजाविधिः । हरिनामग्रहणविधिः । मन्त्रोपदेशविधिः । दशसंस्कारविधिः । वैष्णवानामाह्निककृत्यनिरूपणं । तत्र शौचदन्तधावनस्नानतर्पणसन्ध्यादिविधिकथनं । षोड़शोपचारादिविधिः । श्रीकृष्णस्तोत्रकवचादिकथनं । पुरश्चरणविधिकथनं । विष्णुमन्त्रनिरूपणं । श्रीराममन्त्रकथनं । बालगोपालमन्त्रकथनं । वासुदेवमन्त्रकथनं । हयग्रीवमन्त्रकथनं । वामनमन्त्रकथनं । नृसिंहमन्त्रकथनं । वराहमन्त्रकथनं । हरिहरमन्त्रकथनं । राधाकृष्णमन्त्रकथनं । बलराममन्त्रकथनं । हनूमन्मन्त्रकथनं । गरुड़मन्त्रकथनं । जपपूजापुरश्चरणविधिकथनं शौचं । तिलकविधिकथन । तुलसीमाहात्म्यकीर्त्तनं । करवीरादिपुष्पमाहात्म्यकथनं । विष्णोरपराधाः । प्रणामविधिः । प्रायश्चित्तविधिः । विष्णोर्द्वादशयात्राविधिकीर्त्तनञ्च ।

---

**No. 2120.** भगवद्भक्तिचन्द्रिका । Substance, country-made paper, 12 × 4 inches. Folia, 164. Lines, 5 on a page. Extent, 3,260 ślokas. Character, Bengali. Date, ? Place of deposit, Purohitpáḍá, Ráná-ghát, Paṇḍit Rámalála Bandyopádhyáya Bhaṭṭáchárya. Appearance, old. Prose and verse. Correct.

**Bhagavad-bhakti-chandriká.** On the doctrine of faith and the divinity of Krishṇa, including directions how faith and devotion should be evinced. Anonymous.

**Beginning.** कनकरुचिदुकूलः कुण्डलोद्भासिगण्डः

शमितभुवनभारः कोऽपि लीलावतारः ।

त्रिभुवनसुखकारी शैलधारी मुकुन्दः

परिकलितरथाङ्गो मङ्गलं नस्तनोतु ॥

इह खलु भक्तमुक्तमुमुक्षुप्रभृतीनां सर्व्वेषामध्येषणीयोनिरुपाधिमहाविभूतिरानन्दाकारः सर्व्वानेव प्राणिनोऽपूर्व्वरसास्वादनेनानन्दयन् नन्दनन्दन एव सकलवेदवेदान्तप्रतिपाद्य इति सर्व्ववेदान्तार्थनिष्कर्षरूपेण प्रमाणशिरोमणिना भागवतशास्त्रेण प्रतिपादितं । इत्यादि ॥

**End.** अत एव सर्व्वभूतात्मनस्य भगवतोऽयुधिष्ठिरसारथ्यकरणमपि धर्म्मसंस्थापनार्थमेवेति दिक्।

**Colophon.** इति श्रीभगवद्भक्तिचन्द्रिकापरिपूर्णा।

विषयः। भगवान् नन्दनन्दन एव सकलशास्त्रप्रतिपाद्य इति निरूपणं। श्रीमद्भागवतस्य सकलप्रमाणश्रेष्ठत्वकथनं। वेदादिशास्त्रेभ्यः प्राधान्यकीर्त्तनञ्च। भक्तेः रसत्वव्यवस्थापनं। भगवानेव भक्तिरसालम्बन इति निरूपणं। भक्तिमाहात्म्यं। ज्ञानाभ्याः श्रेष्ठत्वकथनं। भगवन्माहात्म्यकथनं। अवतारतारतम्यकथनं। भगवद्भजनाकरणे दोषकीर्त्तनं। तामसराजससात्त्विकपुराणेषु यथाक्रमं शिवब्रह्मविष्णूनां महात्म्याधिक्यनिरूपणं। भगवत्सेवायामेकान्तिन एव अधिकारीतिनिरूपणं। वासुदेवादिचतुर्व्यूहनिरूपणं। अहङ्कारोपासनानिरूपनं। भगवतः साकारत्वसंस्थापनं। तच्छरीरस्य अमायिकत्वनित्यत्वमितिकथनं। भक्तिरेव तद्दर्शनोपाय इति निरूपणं। भगवतो भक्तानुग्रहत्वकथनं। भगवद्भक्तानां मोक्षेष्वपि निस्पृहत्वकथन। भक्त्युपायकीर्त्तनञ्च।

---

**No. 2121.** प्रायश्चित्तप्रकाशः। Substance, country-made paper, 12 × 3½ inches. Folia, 84. Lines, 6 on a page. Extent, 2,805 ślokas. Character, Bengali. Date, SK. 1698. Place of deposit, Purohitpádá, Ránághát, Paṇḍit Rámalála Bandyopádhyáya Bhaṭṭachárya. Appearance, old. Prose. Correct.

**Práyaśchitta-prakáśa.** Principles which regulate expiations, and the different forms thereof for the expiation of particular offences. By Pradyotana Bhaṭṭáchárya, son of Balabhadra.

**Beginning.** मम सहजविरोधी निर्ज्जितोऽनेन भित्त्वा
धनुरिति + + + + प्रीतिभाजा स्मरेण।
स्रगिव कुवलयानामादरेणोपनीता
जयति जनकजाया राघवेणाक्षदृष्टिः॥
गुरुं गणेशं संस्मृत्य नत्वा स्मृतिकृतोमनीम्।
प्रायश्चित्तप्रकाशोऽयं प्रद्योतनेन तन्यते॥

अथ प्रायश्चित्तलक्षणं। तत्र हारीतः। यद्धोपचितमशुभं नाशयति तत्प्रायश्चित्तं। यद्वा यथाविध्यनुष्ठानात् सञ्चितमशुभमेव नाशयति तत्प्रायश्चित्तं। इत्यादि॥

**End.** आत्मघातिसर्पेण प्रायश्चित्तं विधाय नारायणबलिर्देय इति मतञ्चेदं सर्व्वदेशे न परं प्रचरतीतिशम्।

**Colophon.** इति सन्निश्रबलभद्रात्मजसकलशास्त्रविन्दप्रद्योतनसश्रीप्रद्योतनभट्टाचार्य्यविरचितः प्रायश्चित्तप्रकाशः सम्पूर्णः ।

विषयः । प्रायश्चित्तस्वरूपकथनं । दीर्घकालं प्रायश्चित्ताकरणे व्यवस्थाकथनं । लोभादिना अनुग्रहकरणे दोषकथनं । अतिपातकमहापातकोपपातकजातिभ्रंशकरणादिपापलक्षणं । ब्रह्महत्यादिकर्म्मविपाककथनं । प्रायश्चित्तपूर्व्वाङ्गकृत्यनिरूपणं । कृच्छ्रादिव्रतलक्षणं । अनुतापादिविधिकथनं । सर्व्वेषां पापानां प्रायश्चित्तकथनं । गोवधप्रायश्चित्तं । व्रतभङ्गप्रायश्चित्तं । निषिद्धमांसलशुनपलाण्डुप्रभृतिभोजनप्रायश्चित्तं । अगम्यागमनप्रायश्चित्तं । अपात्रसम्प्रदानककन्यादानप्रायश्चित्तं । परिवेदनप्रायश्चित्तं । विवाहात् पूर्व्वं कन्याया रजोदर्शने प्रायश्चित्तं । उच्छिष्टस्पर्शादौ प्रायश्चित्तं । कन्यापुत्रविक्रयप्रायश्चित्तं । निन्दितान्नभोजनादिप्रायश्चित्तं । अभिचारादिप्रायश्चित्तं । सामान्यतः स्त्रीवधप्रायश्चित्तं । ब्रात्यप्रायश्चित्तं । वृक्षच्छेदनादिप्रायश्चित्तं । जलादौ विष्ठादित्यागप्रायश्चित्तं । नीलीरञ्जितवसनधारणे प्रायश्चित्तं । संसर्गप्रायश्चित्तं । आत्मघातप्रायश्चित्तकथनञ्च ।

---

**No. 2122.** वृन्दावनशतकम्, वा वृन्दावनरहस्यम् । Substance, country-made yellow paper, 9 × 4 inches. Folium, 1. Lines, 18. Extent, 28 ślokas. Character, Bengali. Date, ? Place of deposit, Ráṇágháṭa, Bábu Surendranátha Pála Chaudhúrí; another copy at Calcutta, Bábu S'uvaladása Mallik. Appearance, new. Verse. Correct.

**Vṛindávana-rahasya** *alias* **Vṛindávana-śataka.** A century of verses in praise of the sanctity of the town of Vṛindávana. By Prabodhánanda Sarasvatí. The codex is obviously incomplete, for it contains only 28 s'lokas when from its name it should contain a hundred.

**Beginning.** नमस्तस्मै कस्मैचिदपि पुरुषायाद्भुतमहा-
भक्त्विम्ने विभ्राजत्कनकरुचिधाम्ने स्वरूपया ।
अनङ्कोचिनैव श्वपचमखिलेभ्यः स्वयमहो
ददौ यः सद्भक्तिं विमलतरमामारसमयीम् ॥
यस्मिन् प्रविशन्मनोऽपि मह्यतां का तत्र वार्त्ता पुनः
शास्त्राणां श्रपितश्च यद्भगवता भक्त्यैव भक्तोत्सवः
तद्वृन्दावनमन्मदेन रसिकद्वन्द्वेन केनाप्यहो
नित्याक्रीडतया गृहीतमिह के विद्युर्न गौराश्रयाः । इत्यादि ।

**End.** श्रीमद्वृन्दावनैश्वर्य्यं सत्यशामैव केवलम् ।
इति श्रीवृन्दावनरहस्यम् ।

**Colophon.** इति श्रीप्रबोधानन्दसरस्वतीश्रीपादविरचितं श्रीवृन्दावनशतकं समाप्तम् ।

विषयः । वृन्दावनमाहात्म्यवर्णनं ।

**No 2123.** **दायभागटिप्पनी ।** Substance, country-made paper, 13 × 4 inches. Folia, 122. Lines, 6 on a page. Extent, 3,099 ślokas. Character, Bengali. Date, ? Place of deposit, Májidá, Post Ráṇághát, Paṇdit Madhusúdana Nyáyaratna; another copy at S'ántipura, Paṇdit Kálidása Vidyavagíśa. Appearance, very decayed. Prose. Correct.

**Dáyabhága-ṭippaní.** A gloss on the Dáyabhága of Jímúta-váhana. By S'ínátha, son of S'ríkara Áchárya.

**Beginning.** नवनीरधरनीलमूर्त्तमंबुजलोचनचिरमेदुराम्बरं ।
नौमि वाङ्मनसयोरगोचरं चिन्मयं मुरहराह्वयं महः ॥
जीमूतवाहननिबन्धमयो विबन्ध-
प्रायप्रसिद्धमुनिबन्धवचःसमाधि ।
दुर्व्बोधमत्र विषये नितरां मया तत्
व्याख्यायतेऽखिलमतिप्रतिबोधहेतोः ॥
श्रीकराचार्य्यपुत्रेण प्राचीरत्नेन धीमता ।
टिप्पनी दायभागस्य श्रीनाथेन विधीयते ॥

शास्त्रारम्भे विघ्नविघाताय सदाचारबोधितकर्त्तव्यताकं मङ्गलं विधित्सुः परप्रवृत्त्यर्थं प्रयोजन सम्बन्धाभिधेयांश्चाभिधित्सुर्ग्रन्थकारः प्रतिजानीते, स धर्त्त्वित्यादि । प्रणम्येत्यस्य यथानामार्थमत्या क्षेपः । इत्यादि ।

**End.** एवञ्चेति दुहितृतोऽभ्यर्हितायाः पत्न्या भोगाधिकारश्चमे पत्न्यनन्तराधिकारि णामधिकारस्तदा सुतरां दुहितुरधिकारोऽपीतिभावः । शेषं सुगमं ।

**Colophon.** (इतः परं नास्ति ।)

विषयः । जीमूतवाहनकृतदायभागस्य पत्न्यधिकारांशं व्याख्यानं ।

---

**No. 2124.** **गुणप्रकाशविवृतिः ।** Substance, country-made paper, 11 × 2¼ inches. Folia, 91. Lines, 7 on a page. Extent, 3,344 ślokas. Character, Bengali. Date, ? Place of deposit, Niśidágaḍa Grama, Post Vñaichi, Zilla Burdwan, Paṇdit Váṇeśvara Vidyáratna; other copies at S'ántipura, Rámayádava Chuḍámaṇi, and at Calcutta, Government of India. Appearance, old. Prose. Correct.

**Guṇaprakáśa-vivṛiti.** A commentary on the Kiraṇávali of Varddhamána Mis'ra. By Mathuránátha Tarkavágís'a, son of S'rírama Tarkálankára. In Hall's "Contributions," (p. 67) the work is named Guṇaprakás'a-didhiti-Máthuri. There is Guṇaprakás'a-vivṛiti by Raghu-nátha S'iromaṇi.

**Beginning.** कुञ्चिताधरपुटेन पूरयन् वंशिकां प्रचलदङ्गुलिपङ्क्तिः ।
सोऽयमखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥
श्रीमताभयरानाथतर्कवागीशधीमता ।
गुणप्रकाशविवृतिः क्रियते विदुषां मुदे ॥

निर्विघ्नं प्रारिप्सितग्रन्थसमाप्तिकामनया कृतं महादेवमन्याजलाञ्जलिनमस्कारकृपं मङ्गलं शिष्यशिक्षायै आदौ निबध्नाति एकत्वेति । इत्यादि ।

**End.** प्रकृतेचाग्निसंयोगस्य कार्य्यसत्त्वभावेन कुतोचेतुत्वं कल्पनीयं गौरवान्मानाभावाच्च न्यायवैशेषिकसिद्धान्तस्य निर्य्युक्तिकत्वेनाश्रद्धेय इति प्राहुः । (इत्यतोनास्ति)

विषयः । वर्द्धमानकृत किरणावलीप्रकाशस्य व्याख्यानं ।

---

**No. 2125.** वैष्णवतोषणी । Substance, country-made paper, 13 × 5 inches. Folia, 470. Lines, 6—12 on a page. Extent, 25,380 slokas. Character, Bengali. Date, ? Place of deposit, Nisidágada Gráma. Post Vñaichi, Zilla Burdwan, Pandit Vánesvara Vidyaratna; other copies, at Calcutta, Dr. Rájendralála Mitra, and Calcutta, Government of India. Appearance, fresh. Prose. Generally correct.

**Vaishnava-toshaní.** A commentary on the tenth book of the Bhágavata Purána. By Sanátana Gos'vámi. The commentator's object is to establish the divinity of Krishna, and elaborate the philosophy of the Bhakti doctrine. In the colophon of the work a long account is given of the author, and of the associates of Cháitanya who the author holds is an incarnation of Krishna.

**Beginning.** श्रीमन्मदनगोपालं वृन्दारण्यपुरन्दरं ।
श्रीगोविन्दं प्रपद्येऽहं दीनानुग्रहकारकं ॥
वन्दे श्रीकृष्णचैतन्यं भगवन्तं कृपार्णवं ।
प्रेमभक्तिवितानार्थं गौड़ेष्ववततार यः ॥
श्रीमाधवपुरीं वन्दे यतीन्द्रं शिष्यसंयुतं ।
लोकेष्वङ्कुरितो येन कृष्णभक्तिसुराङ्घ्रिपः ॥
श्रीभागवतनिष्ठ्यर्थटीकाहृष्टिरतापि चैः ।
श्रीधरस्वामिपादांस्तान् वन्दे भक्त्येकरक्षकान् ॥
— — — — — — — — — — — ।
श्रीचैतन्यपदाम्भोजमन्त्रैरेव वैष्णवैः ।

सम्यग्‌प्रथयितुं शक्या सेयं वैष्णवतोषणी ॥

— — — — — — — — — — ।

श्रीयुक्तश्रीराधेतिप्रायोगोऽत्र श्रीकृष्णलीलारम्भोऽतिशयेन प्रेम्णा विराजमानत्वात्। टजभावः समासान्तविधेरनित्यत्वात्। इत्यादि।

End. अहामधुपुरीधन्या वैकुण्ठाच्च गरीयसीत्यादि ॥

Colophon. इति श्रीदशमटिप्पण्यां नवतितमः।

श्रीमच्चैतन्यरूपस्य प्रीत्यै भगवतः प्रभोः।

टिप्पणी दशमेस्कन्धे पूर्णा वैष्णवतोषणी ॥

ये श्रीभागवतं प्राप्य स्वप्ने प्राप्ताश्च जागरे।

स्वप्नदृष्टा देवविप्राः प्रथमे वयसि स्थिताः ॥

समज्ञः श्रीभगवतः प्रेमामृतमहाम्बुधौ।

तेषामेवहि लेखोऽयं श्रीसनातननामिनां ॥

तदेतद्धिनिवेद्यापि किञ्चिदन्यद्विवक्षया।

अथोतदङ्घ्रिजीवेन जनेनेदं निवेद्यते ॥

उद्यद्वात्सपदक्रमाश्रितवती यस्यामृतग्राहिनी

जिह्वा कल्पलता त्रयी मधुकरी भूयोनरीनृत्यते।

ईशे राजसभाजितपदः कर्णाटभूमिपतिः

श्रीसर्व्वज्ञजगद्गुरुर्भुवि भरद्वाजान्वयग्रामणीः ॥ १ ॥

पुत्रस्तस्य न्यपस्य काश्यपतुलामारोहतोरोहिणी-

कान्तस्पर्द्धियशोधरः सुरपतेस्तुल्यप्रभावोऽभवत्।

सर्व्वेच्छापतिपूजितोऽखिलयजुर्वेदैकविश्रामभू-

स्संजीवाननिरुद्धदेव इति यः ख्यातिं चितो जग्मिवान् ॥ २ ॥

महिष्योभूर्यस्यप्रथितयशसस्तस्य तनयो

प्रजज्ञाते रूपेश्वरहरिहराख्यौ गुणनिधी।

तयोराद्यः शास्त्रे प्रवलतरभावं वकुविधे

जगामान्यः शास्त्रे निजनिजगुणप्रेरिततया ॥ ३ ॥

विभज्य स्वं राज्यं मधुरिपुपुरप्रस्थितिदिने

पिता ताभ्यां रूपेश्वरहरिहराभ्यां किल ददौ।

निजज्येष्ठं रूपेश्वरमथकनिष्ठो हरिहरः

स्वराज्यादार्य्याणां कुलतिलकमभ्रंशयदसौ ॥ ४ ॥

श्रीरूपेश्वरदेव एवमरिभिर्निर्धूतराज्यः क्षमा-

दृष्टाभिस्तुरगैः समं दयितया पौरस्त्यदेशं ययौ ।
तत्रासौ शिखरेश्वरस्य विषये सख्युः सुखं संवसन्
धन्यः पुत्रमजीजनद्गुणनिधिं श्रीपद्मनाभाभिधं ॥ ५ ॥
यजुर्वेदः साङ्गा वितति रपि सर्व्वोपनिषदां
रसज्ञायां यस्य स्फुटमघटयत्ताण्डवकलां ।
जगन्नाथप्रेमोल्लसितहृदयः कर्णपदवीं
न यातः केषां वा स किल स्वरूपेश्वरसुतः ॥ ६ ॥
विहाय गुणिशेखरः शिखरभूमिवासस्पृहां
स्फुरत्सुरतरङ्गिणीतटनिवासपर्य्युत्सुकः ।
ततो दनुजमर्द्दनक्षितिपपूज्यपादः क्रमा-
दुवास नवहट्टके स किल पद्मनाभः कृती ॥ ७ ॥
मूर्त्तिं श्रीपुरुषोत्तमस्य यजतस्तत्रैव सर्वोत्सवैः
कन्याष्टादशकेन सार्द्धमभवत्तस्य पञ्चात्मजाः ।
तत्राद्यः पुरुषोत्तमः खलु जगन्नाथश्च नारायणो-
धीरः श्रीलमुरारिरुत्तमगुणः श्रीमान् मुकुन्दः कृती ॥ ८ ॥
जातस्तत्र मुकुन्दतो द्विजवरः श्रीमान् कुमाराभिधः
कश्चिद्द्रोहमवाप्य सत्कुलजनिर्वङ्गालयं सङ्गतः ।
तत्पुत्रेषु महिष्ठवैष्णवगणप्रेष्ठास्त्रयो जज्ञिरे
ये स्वं गोत्रममुं च देहं च पुनस्तत्कृत्स्नैरर्च्चितं ॥ ९ ॥
आदिः श्रीलसनातनस्तदनुजः श्रीरूपनामा ततः
श्रीमद्वल्लभनामधेयवलितो निर्व्विद्य ये राजतः ।
आसाद्यातिकृपां ततो भगवतः श्रीकृष्णचैतन्य + -
माथाख्यं खलु भेजिरे मुरहरप्रेमाढ्यभक्तिश्रियि ॥ १० ॥
यः सर्व्वावरजः पिता मम स तु श्रीराममासेदिवान्
गङ्गायां द्रुतमग्रजौ पुनरमू वृन्दावनं सङ्गतौ ।
याभ्यां माथुरगुप्ततीर्थनिवहो व्यक्तीकृतो भक्तिभि-
रप्युर्व्व्यां व्रजराजनन्दनमताः सर्व्वत्र संवर्द्धिताः ॥ ११ ॥
यन्मित्रं रघुनाथदास इति विख्यातः क्षितौ राधिका-
कृष्णप्रेममहार्णवोर्म्मिनिवहे घूर्णन् सदा दीव्यति ।
दृष्टान्मत्रकरप्रभाभरमतीत्यैवानयोर्भ्रातरो-
र्येस्तुल्यत्वपदे मतस्त्रिभुवनेष्वाश्चर्य्यमार्य्योत्तमैः ॥ १२ ॥

गोपालपालकव्याजाद्बृयोः साचाद्बभूव च।
सोचाप्छ्रीयतगोपालः चीरावरणलीलया॥
तयोरतुजरहरेपु काव्यं श्रीहंसदूतकं।
श्रीमदुद्धवसन्देशश्छन्दोऽष्टादशकस्तथा॥
स्तवावल्युत्कलिकावल्ली गोविन्दविरुदावली।
प्रेमेन्दुसागराद्याश्च बहवः सुप्रतिष्ठिताः॥
विदग्धललितामाध्वमाधवं नाटकद्वयं।
भाणिकादानकेत्याख्या रसामृतयुगं ततः॥
मथुरामहिमा पद्यावली नाटकचन्द्रिका।
संक्षिप्तश्रीभागवतामृतमेतेन च संकृताः॥
अथाग्रजकृतेष्वग्र्यं श्रीभागवतामृतं॥
हरिभक्तिविलासस्य तट्टीका दिक्प्रदर्शिनी॥
लीलास्तवटिप्पणी च श्रीमद्दैष्णवतोषिणी॥

विषयः। श्रीमद्भागवतीयदशमस्कन्धस्य व्याख्यानं।

---

No. 2126. महाभारतार्थसङ्ग्रहदीपिका, (आदिपर्व्व)। Substance, palm-leaf, 10 × 1½ inches. Folia, 121. Lines, 5 on a page. Extent, 2,571 ślokas. Character, Bengali Date, Śk 1600. Place of deposit, Niśidágada Gráma, Post Vñaichi, Zilla Burdwan, Pandit Vánesvara Vidyaratna; another copy at Calcutta, Government of India. Appearance, old. Prose. Correct.

**Mahábháratártha-saṅgraha-dípiká.** A commentary on the Mahábhárata. By Arjuna Mis'ra, son of Is'ána. The codex contains only the A'di Parva or the first book.

**Beginning.** यस्यैकवेणुपरमाणुरपि क्षणेन
तुदेयाति विपक्षं समभीप्सितेषु।
सभ्रो हरेर्हरतु पादसरोजयुग्मं
प्रारिप्सितप्रतिहतीरभितश्चिराय॥
वैद्यासवैशम्पायनदेवबोधविमलबोधसर्व्वज्ञनारायणभट्टशाण्डिल्यमाधवपित्रपादेभ्यो नमः।
श्रीदेवबोधपादादिमतमालोक्य यत्नतः।
क्रियतेऽर्ज्जुनमिश्रेण भारतार्थप्रदीपिका॥

श्रोतुं हि ऋषयः सर्व्वे परं धर्म्मं समागताः । इत्यादि ।

End. वायुना पूरितोगच्छेद्यत्रस्तव यथेच्छति ।
यमलोकं समुद्रांश्च सप्तद्वीपां वसुन्धरां ॥
यथेष्टं भ्रमते देवि मनस्तद्वायुना सह ।
समयं सर्व्वमाख्यातं किं भूयः परिपृच्छसि ॥

Colophon. इति नन्दिकेश्वरसंहितायां शिवधर्म्मोत्तरे एकविंशतितमोऽध्यायः ।

विषयः । १—२ये, अध्याये,—नन्दिकेश्वरस्य सनत्कुमारेण सह सवादेन शिवधर्म्ममाहात्म्य कीर्त्तनं । शिवलिङ्गमाहात्म्यकीर्त्तनं । इन्द्रोपेन्द्रादिदेवभेदेन स्फटिकादिलिङ्गपूजापरत्वकथनं । शिवपूजाया अकरणे प्रत्यवायनिरूपणं । चराचरभेदात् द्विविधलिङ्गकथन । लिङ्गपूजामाहात्म्य-कथनञ्च ।

३—४र्थे अध्याये,—शिवभक्तानां नियमादिकथनं । शिवालयनिर्म्माणफलकथनं । शिवालयलेपनमाहात्म्यकथनमुखेन गोमयादिग्रहणविधिकथनं । लिङ्गस्नपनविधिकथनं । घृतेक्षुरसादि-द्रव्यैः स्नपने प्रत्येकं फलविशेषकथनं । महास्नानविधिकथनं । गन्धनैवेद्यादिनिरूपणञ्च । पुष्प-विवेचनं । बिल्वपत्रलक्षणादिकथनं । सङ्गीतादिकरणविधिः ।

५—८मे अध्याये,—रुद्रगीतकथनं । शान्त्यध्यायकथनं । तिथिनक्षत्रमासविशेषे शिवपूजामाहात्म्यकथनं । शिवलिङ्गे समस्ततीर्थावस्थानकथनं । शिवलिङ्गसमीपे नृत्यगीतादिमाहात्म्यकथनं । गोमाहात्म्यकथनं गोरङ्गविशेषे तीर्थविशेषस्थितिकथनं । गोमाविनीकथनं ।

९—११शे अध्याये,—शैवगतिप्राप्त्युपायकीर्त्तनं । शिवलिङ्गमहाव्रतकथनं । द्वादशमासीय-शिवव्रतकथनं । कैलासव्रतकथनं । गोप्रदानविधिकथनं । सर्व्ववर्णसर्व्वाश्रमसाधारणशैवाचारकथनं । तत्र रुद्राक्षभस्मजटादिधारणविधिकथनं । अहिंसामाहात्म्यकीर्त्तनं । सत्यप्रशंसादिकथनं ।

१२—१४शे अध्याये,—शिवभक्तिनिरूपणं । शैवयोगमाहात्म्यकथनं । दानविधिकथनं । ध्याननिरूपणं । गोकर्णभद्रकर्णाद्यष्टशैवस्थाननिरूपणं । पञ्चाष्टककथनं । गुह्याष्टककथनं । शिव-धर्म्मलक्षणादिकथनं । स्वर्गनरकलक्षणादिकथनं । मोक्षाय ध्यानयोगकथनं । पापभेदनिरूपणं । संसारस्य दुःखमयत्ववर्णनं ।

१५—१७ अध्याये,—येन येन पापेन यद्यद्रूपीरोगो जायते तन्निरूपणं । (कर्म्मविपाक-कथनं ।) नरदेहनिरूपणं । प्रत्यभावनिरूपणं । नरकयन्त्रणाकथनं । शिवज्ञानकथनं । शिवमन्त्र-कथनं । विद्यादानफलकीर्त्तनं ।

१८—२१ अध्याये,—कर्म्मयज्ञकथनं । ध्यानयज्ञकथनं । ज्ञानयज्ञकथनं । शिवभक्ताय दान-माहात्म्यकथनं । शैवाचार्यप्रायश्चित्तविधिकथनं । गोलोकमाहात्म्यादिकथनं । षड्धातुकदेहस्य वायु-प्राधान्यकथनञ्च ।

**No. 2209. न्यायरत्नावली।** Substance, aguru bark, 10 × 3 inches. Folia, 106. Lines, 8 on a page. Extent, 4,725 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇághāṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya. Appearance, fresh. Prose. Correct.

**Nyáyaratnávalí.** A commentary on the *Siddhántavindu*, of Madhusúdana Sarasvatí, prefaced by a dissertation on the fallacies of the Chárváka, Bauddha, Jain, Sáṅkhya, Nyáya, Vaiśeshika and other doctrines, observed from a Vedánta standpoint. By Brahmánanda Sarasvatí. Hall's Contributions, p. 109.

**Beginning.** नमोनवघनश्यामकामकामितदेहिने ।
कमलाकामसौदामकण्ठकामुकगेहिने ॥
अद्वैतसिद्धेष्टीकायास्तदीययोश्च संग्रहात् ।
विचित्ररचना काचिद् ब्रह्मानन्देन रच्यते ॥
शङ्करोक्तिमहाम्भोधेर्गुरूणामुपदेशतः ।
उद्धृतां प्रकटीकुर्व्वे न्यायरत्नावलीमिह ॥

तत्राद्वितीयस्वप्रकाशनिरतिशयानन्दरूपयोर्जीवब्रह्मस्वरूपयोरैक्यमुक्तानन्दरूपं तदहं ब्रह्मास्मीत्यादिवेदान्तमहावाक्यं द्वितीयविषयकप्रत्यक्षादिसर्व्वप्रमाणबाधकमतानात्मभूतं सर्व्वं सिद्धेत्याद्यर्थविवेचनवचनरोचमानं श्रीमद्बादरायणशङ्करसुरेश्वराचार्य्यवर्य्यकृतमर्य्यादं वेदान्तदर्शन दर्शनेषु सर्व्वेषु दर्शनीयतमं दर्शनीयं—————————प्रकरणे कर्त्तव्यतया प्रतिजानीते,—श्रीशङ्करेत्यादि। श्रीशङ्करस्वामी नवावतारश्चेति कर्म्मधारयः। इत्यादि।

**End.** लब्धतिस्वल्पोरचःप्राप्तो निबन्धो ग्रन्थः। अत्र ग्रन्थे सौष्ठवं गुणवत्त्वं ब्रह्मभद्रस्य स्वसेवकब्रह्मचारिणः।

श्रीनारायणतीर्थानां गुरूणाञ्चरणाम्बुजं।
नमामि वाङ्मनःकायैरनन्यशरणैः सदा॥
भजे श्रीपरमानन्दसरस्वत्याः पदाम्बुजं।
यद्देवाल्लम्भा संसारसागरोऽगोष्पदीकृतः॥

**Colophon.** इति श्रीब्रह्मानन्दसरस्वतीविरचिता सिद्धान्तबिन्दुटीका न्यायरत्नावली समाप्ता। शुभमस्तु।

**विषयः।** मधुसूदनसरस्वतीकृतसिद्धान्तविन्दुनामकवेदान्तप्रकरणस्य चार्व्वाक-बौद्ध-जैन-सांख्य-न्याय-वैशेषिकादिमतखण्डनपुरःसरं व्याख्यानं।

**No. 2210** मुग्धबोधपरिशिष्टम्। Substance, country-made yellow paper, 16 × 3 inches. Folia, 22 Lines, 6 on a page. Extent, 511 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ránághāṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya. Appearance, fresh. Prose. Correct.

**Mugdhabodha-pariśishṭa** An appendix to Vopadeva's Sanskrit grammar named 'Mugdhabodha' By Nandakis'ora Bhaṭṭácharya Chakravartí.

**Beginning.** अथ कारकं विवृणुमः। तत्र क्रियानिमित्तं कारकमिति वक्ष्यः। तत्र निमित्तपदस्य कारणार्थत्वे विप्राय भूमिं ददाति इत्यत्र सम्प्रदाने अव्याप्तिः। तस्य त्यागविशेषात्मकदानक्रियायाः कारणत्वाभावात्। अनन्यथासिद्धिनियतपूर्व्ववर्त्तिन एव कारणपदार्थत्वात् प्रयोजकार्थकत्वे तु देवदत्तस्य तण्डुलं पचतीत्यत्र सम्बन्धिन्यतिव्याप्तिः।

**End.** इमनन्तः पिमः पुंलिङ्गः स्याद्वा। प्रेमा प्रेम। स्वार्थे प्रत्ययान्तानां क्वचित् लिङ्गान्तरमभिधानात्। यथा त्रिलोकी एव त्रैलोक्यं मुक्ता एव मौक्तिकं।

**Colophon.** इति नन्दकिशोरभट्टाचार्य्यचक्रवर्त्तिकृते मुग्धबोधपरिशिष्टे तद्धितप्रकरणं समाप्तं।

विषयः। मुग्धबोधव्याकरणस्य कारकप्रकरणादारभ्य तद्धितप्रकरणपर्य्यन्तं यावत् वक्तव्यव्याकरणप्रक्रियाकथनं। कारकसमासादीनां लक्षणादिविवेचनं। प्रत्ययादिनिरूपणञ्च।

---

**No. 2211.** आर्य्यासप्तशती। Substance, country-made yellow paper, 17 × 4 inches. Folia, 45. Lines, 6 on a page. Extent, 1,012 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ránághāṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya; another copy at S'ántipura, Paṇḍit Kálidása Vidyávágís'a. Appearance, fresh. Verse. Incorrect.

**Áryá-saptaśatí.** Seven hundred stanzas in the Áryá mitre on various subjects, chiefly erotic. By Govardhana Ácharya.

**Beginning.** पाणिग्रहे पुलकितं पुरैशं भूतिभूषित जयति।
अङ्कुरित इव मनोभूर्यस्मिन् भस्मावशेषोऽपि॥
मामव संश्रुण विषमिदमिति सातङ्कं पितामहेनोक्तः।
प्रातर्ज्जयति सलज्जः कज्जलमलिनाधरः शम्भुः॥ इत्यादि।

**End.** उदारनवलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां मः।
द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्म्मलीकृत्य॥

विरचन् वामनमोलां वामन इव कविपदं लिप्सुः ।
अक्षतार्य्यासप्तशतीमेतां गोवर्द्धनाचार्य्यः ॥

**Colophon.** इति श्रीगोवर्द्धनाचार्य्यविरचितार्य्यासप्तशती समाप्ता ।

**विषयः ।** शृङ्गाररसविषयकवर्णनं ।

---

**No. 2212** शारीरकन्यायनिर्णयः । Substance, country-made paper, 15 × 3½, inches. Folia, 182. Lines, 18 on a page. Extent, 17,308 ślokas. Character, Bengali Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágís'a. Appearance, decayed. Prose. Correct.

**S'árírakanyáya-nirṇaya.** A gloss on S'aṅkara's commentary on the Vedánta Sútra. By A'nandajṉána, disciple of S'uddhánanda. Hall's Contributions, p. 89.

**Beginning.** अथखात्मसपूर्व्वमर्थधिषणेर्याश्यं पुमर्थास्पदं
लक्ष्यं लक्षणभेदतः श्रुतिगतं निर्द्धूतमायार्थकं ।
आम्नायान्तविभातविश्वविभवं सर्व्वाविरुद्धं परं
मक्षज्ञानमनर्थसार्थविधुरं ब्रह्म प्रपद्ये सदा ॥
येलोकं सकलं पुनाति निगमा ये प्राक्करैकात्मतो-
ध्यातं येन जगज्जगन्ति सततं यस्मै नमस्कुर्व्वते ॥
यस्मादाविरभूदशेषममरा यस्य प्रसादार्थिनो-
यस्मिन् पर्य्यवसास्यति स्फुरदिदं तस्मै नमो विष्णवे ।
— — — — — — — — — — ।
सङ्गाध्यात्मजजातजातमधरप्रेयोमधुप्रार्थना-
स्वार्थव्यपधियः समस्तमयतः सर्गेऽपि निर्व्विद्गिनः ।
यस्मिन् मुक्तिपथोमुमुक्षमुनिभिः संप्रार्थितः संबभौ
तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिधां बिभ्रते ।
यत्पादाम्बुजचञ्चरीकधिषणानिर्व्वाणमार्गाधिगा
पंक्तिर्मुक्तनिसर्गदुर्गदुरिता वाचंयमानामियं ।
यस्मिन् नित्यमिदं प्रमादि समभूद्बोधाङ्कुरो मे यतः
शुद्धानन्दमुनीश्वराय गुरवे तस्मै परस्मै नमः ॥
मातर्मतोऽस्मि भवतीमथवार्थये त्वां
चेतः सरस्वति परास्परासमर्थं ।

शारीरके महदनघश्चर्मप्रसन्न-

मेकाग्रमस्तु वचसा सह सम्यगर्थै ॥

श्रद्धाभक्ती परिधाय विधायागमभावनां ।

श्रीमच्छारीरके भाष्ये करिष्ये न्यायनिर्णयं ॥

नित्याध्ययनविध्युपादापितवेदान्तवचोभिरापाततः प्रतिपन्नं शास्त्रारम्भौपयिकं अनुबन्धजातं न्यायतो निर्णेतुं भगवद्बादरायणः सूचितवान्,—अथातो ब्रह्मजिज्ञासेति ।

**End.** सूत्राभ्यामस्य प्रयोजनमाह,—अनावृत्तिः शब्दादिति । अध्यायपरिसमाप्तिरेव परि- + + र्थः + + इयः प्रकृते सूत्रस्यैव अभ्यासाच्चतुर्लक्षणस्य वेदान्तमीमांसाशास्त्रस्य समन्वया-विरोधसाधनफलानां साकल्येन उक्तत्वाद्व्याख्यानवशेषात् परिसमापनमुचितमिति भावः ।

व्याख्यानं व्याततर्क + + च + यत्नत + + + तर्कशङ्का

+ + + + + + + प्रस्तुत परमतोवस्तुतत्त्वं श्रयन्ती ।

शुद्धानन्दाङ्घ्रिपद्मस्मृतिभरनिभृतप्रौढगाढोत्तिगूढा—

नन्दज्ञानप्रणीता जगति मुदमियं मद्धियां संविधत्तां ॥

सन्त्येव बहुलानीह व्याख्यानानि महाधियां ।

व्याख्या तथापि सौख्येन + + + + समाहृता ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदान-न्दज्ञानकृतं श्रीमच्छारीरकभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य चतुर्थपादः । समाप्तोऽयं शारीरकन्यायनिर्णयः ।

विषयः । ब्रह्मसूत्रीयशाङ्करभाष्यस्य व्याख्यानम् ।

---

**No 2213** योगिनीतन्त्रं, (द्वितीयभागः ।) Substance, country-made yellow paper, 14 × 6 inches. Folia, 108. Lines, 10 on a page. Extent, 3,510 ślokas Character, Bengali. Date, ? Place of deposit, Ulá, Post Raṇágháṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya. Appearance, new. Prose. Correct.

**Yoginí Tantra.** An original Tantra of the S'ákta class. The codex contains only the second half of the work, and even that is obviously not complete.

Contents, I. Praise of the Tantra. Forms of Kálí. Characteristics of Gurus. Kálí identified with the Supreme Divinity. Merit of accepting her mantra.

II. Identification of Kálí, Tárá, and Vidyá. Rosaries. Resolution

to adopt S'ákta Mantras. Initiation. Worship. Expiation for not worshiping S'akti at stated periods.

III—V. Amulets for curing diseases, Amulets for effecting subjugation &c. Diagrams for insuring success in worldly affairs. The six principal rituals. Bedsteads. Courtyards. A Rite with the root of a Bel tree. Shaving of the hair of the head.

VI—IX. Characteristics of Dívya and Bira conditions. Svapnávatí Vidyá, defined. Science of restoring the dead to life. Science of attracting whatever one lists. Origin of Yoginís. Story of Ghora, a demon.

**Beginning.** कैलास शिखरारूढं शङ्कर परमेश्वरं।
पप्रच्छ गिरिजाकान्तं गौरी तं वृषभध्वजं॥
श्रीदेव्युवाच।
भगवन् सर्व्वधर्मज्ञ सर्व्वशास्त्रमय प्रभो।
सूचितं योगिनीतन्त्रं तन्मे वद जगद्गुरो॥
माहात्म्यं कीर्त्तितं तस्य पुरा श्रीशैलमन्दिरे। इत्यादि।

**End.** व्रतं परे तु कर्त्तव्यं प्रतिष्ठां परतश्चरेत्।
नित्यव्रते महेशानि द्वितीयव्रतमाचरेत्॥
इति आनीचि देवेशि व्रतमेतत् व्रतं परं।

**Colophon.** इति योगिनीतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे द्वितीयभागे नवमः पटलः।

विषयः। १प्रथमे पटले,—योगिनीतन्त्रमाहात्म्यादिकथन। कालीरूपवर्णनादिक। गुरुमाहात्म्यतल्लक्षणादिकथनं। कालिकैव महाविद्येति निरूपणं। तन्मन्त्रग्रहणफलादिकथनं।

२ये पटले,—कालिकातारविद्ययोरभेदकथनं। मालाविधानकीर्त्तनं। संकल्पविधिः। दीक्षाविधिकथनं। पूजाजपकालादिनिरूपणं। यथाकाले सन्ध्याया अकरणे दशधागायत्रीजपरूप प्रायश्चित्तविधानञ्च।

३य—५मे, पटले,—ज्वरादिनाशनकवचादिकथनं। वशीकरणादिसाधनकवचकथनं। राज्य-सुत-धन-ज्ञानलाभसाधनादियन्त्रकथनं। षट्कर्म्मादिसाधनकथनं। अथ शय्यासाधनविधिः। विधाटचतुर्व्वाटसाधनविधिः। विल्वमूलसाधनविधिः। मुण्डसाधनविधिकथनञ्च।

६ष्ठ—९मे पटले,—दिव्यवीरभावादिनिरूपणं। स्वप्नावतीविद्यानिरूपणं। मृतसञ्जीवनी-विद्याकथनं। सर्व्वाकर्षणीविद्यादिकथनं। योगिन्युत्पत्तिविवरणकथनं। तत्र घोरनामकदैत्योपाख्यानकथनञ्च।

**No 2214** भगवतीपद्यपुष्पाञ्जलिः। Substance, country-made paper, 12 × 4 inches. Folia, 5 Lines, 8 on a page. Extent, 82 ślokas. Character, Nágara Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya Appearance, fresh. Verse. Incorrect.

**Bhagavatí-padya-pushpáñjalí.** A hymn in praise of the Deví and her attributes. By Rámakṛishṇa, son of Bhadra Suri Tripáṭhi, of Karavaṇjunapuram.

**Beginning.** भगवतीभगवत्पदपङ्कजं
भ्रमरभूतसुरासुरसेवितं।
सुजनमानसहंसपरिष्कृतं
कमलयाऽमलया निभृतं भजे॥
तावुभावपि वन्देहं विघ्नराजगुरूदैवते।
नरनारायणोऽस्त्वेको नरसिंहोन मेऽपरः॥ (?)
हरिहरगुरुपद्मे हृद्यपद्मेऽनुरागा-
दधिगतपरभागामुन्निधावादरेण।
तानुचरि करोमि प्रीतये भक्तिभाजां(?)
भगवति पदपद्मे पद्यपुष्पाञ्जलिं ते॥ इत्यादि।

**End.** रमयति किलकर्ष + व चित्तं नराणां
+ पत्नजवर + मद्रामकृष्णः कवीनां।
सकृत सुकृतगम्यं रम्यपद्यैकहर्म्यं
स्तवनभवनहेतुः प्रीतये विश्वमातुः॥

**Colophon.** इति श्रीमद्भगवतीपादारविन्दमकरन्दसान्द्रसमुदा + ल + + + करमैञ्जनपुरवासिभद्रसूरित्रिपाठितनुजरामकृष्णकविना विरचितभगवतीपद्यपुष्पाञ्जलिः सम्पूर्णः।

विषयः। स्तोत्रव्याजेन देव्या रूपगुणमाहात्म्यादिकीर्त्तनं।

---

**No. 2215** नामावलिस्तोत्रम। Substance, country-made paper, 12 × 9 inches. Folia, 2. Lines, 7 on a page. Extent, 14 ślokas. Character, Nágara. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya. Appearance, fresh. Verse. Incorrect.

**Námávali-stotra.** A hymn in which a great number of epithets, used as names of S'iva, are strung together. By S'aṅkara Áchárya.

Beginning हे चन्द्रचूड़ मदनान्तक शूलपाणे
स्थाणो गिरीश गिरिजेश महेश शम्भो।
भूतेश + + भयसूदन मामनाथं
संसारदुःखगहनाज्जगदीश रक्ष॥
हे पार्व्वतीहृदयवल्लभ चन्द्रमौल
भूताधिप स्मरहर विद्याधिनाथ।
हे वामदेव भव रुद्र पिनाकपाणे
संसारदुःखगहनाज्जगदीश रक्ष॥ इत्यादि।

End. गौरीविलासभवनायमहेश्वराय
पञ्चाननाय शरणागतक + दाय।
सर्व्वाय सर्व्वजगतामधिपाय तस्मै
दारिद्र्यदुःखशमनाय नमः शिवाय॥

Colophon इति श्रीशंकराचार्य्यविरचित नामावलीस्तोत्रं समाप्तं॥

विषयः। स्तोत्रच्छलेन शिवनामावल्लिकथनं।

---

**No. 2216** लघुसप्तशतीस्तोत्रम्। Substance, country-made paper, 13 × 4 inches. Folium, 1. Lines, 18. Extent, 35 ślokas. Character, Nágara. Date, Sm. 1772. Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágís'a. Appearance, fresh. Verse. Correct.

**Laghusaptaśatí-stotra.** A hymn in praise of the Deví as described in the well-known Chaṇḍí section of the Márkaṇḍeya Puráṇa. By Pṛithvídhara Áchárya.

ॐ नमश्चण्डिकायै।

Beginning. यत्कर्म्म धर्म्मनिलयं कलयन्ति तज्ज्ञा
यज्ञादिकं तदखिलं सफलं त्वयैव।
त्वं चेतना यत इति प्रविचार्य्य चित्ते
नित्ये त्वदीयचरणौ शरणं प्रपद्ये॥
प्रायोधिनायतनयापतिरेष शेष-
पर्य्यङ्कलालितवपुः पुरुषः पुराणः।
लक्ष्मीपाशविवशोजगदम्ब सोऽपि
व्याघूर्णमाननयमः शयनं चकार॥ इत्यादि।

End. श्रीसिद्धापरनामधेयः
श्रीशम्भुनाथोभवनैकनाथः ।
तस्य प्रसादात्कुलभागलक्ष्मीः
पृथ्वीधरः स्तोत्रमिदं चकार ॥

Colophon. इति श्रीपृथ्वीधराचार्य्यविरचितं लघुस्तवशतीस्तोत्रं सम्पूर्णं । संवत १७७२ वैशाख १४ लिखितमिदं भट्टवैजनाथसुतेन विष्णुदेवेन ॥

विषयः । स्तोत्रव्याजेन देव्यामाहात्म्यादिकीर्त्तनं ।

---

No 2217. शिवपञ्चाशिका वा आत्मार्पणस्तुतिः । Substance, country-made paper, 13 × 4 inches. Folia, 6. Lines, 10 on a page. Extent, 135 slokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Pandit Kálidása Vidyávágís'a. Appearance, fresh. Verse. Correct.

S'ivapanchás'iká ALIAS A'tmárpaṇastuti. A hymn in praise of S'iva. In course of the hymn the author dedicates himself to the divinity. By Apyayí Díkshita.

Beginning. कस्ते बोद्धुं प्रभवति परं देवदेव प्रभावं
यस्मादित्थं विविधरचना सृष्टिरेष बभूव ।
भक्तिग्राह्यस्त्वमिति तदपि त्वामहं भक्तिमात्रात्
स्तोतुं वाञ्छाम्यतिमहदिदं साहसं मे सहस्व ॥
क्षित्यादीनामवयववतां निश्चितं जन्म ताव-
न्नास्त्येवं तत् क्वचन कलितं कर्त्रधिष्ठानहीनं ।
नाधिष्ठातुं प्रभवति जडो नाप्यनीशस्वभाव-
स्तस्मादाद्यस्त्वमसि जगतां नाथ जाने विधाता ॥ इत्यादि ।

End. आत्मार्पणस्तुतिरियं भगवन्निबद्धा
यद्यप्यनन्यमनसा न मया तथा ते ।
वाचापि केवलमयं शरणं वृणीते
दीनो वराक इति रक्ष कृपानिधे मां॥

Colophon. इति श्रीशिवपञ्चाशिकाप्ययिदीक्षितकृतात्मार्पणस्तुतिः समाप्ता

विषयः । स्तोत्रव्याजेन शिवमाहात्म्यादिकीर्त्तनं ।

---

**No. 2218.** स्मृतिप्रदीपः। Substance, country-made paper, 18 × 4 inches. Folia, 121. Lines, 6 on a page. Extent, 3,050 ślokas. Character Bengali. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Dínanátha Bhaṭṭácháryáya. Appearance, decayed. Prose and verse. Correct.

**S'mṛitipradípa.** A digest of a number of Smṛiti rules. By Chandras'ekhara Mahámahopádhyáya.

**Beginning.** नमामि देवमीशानं सर्वस्य जगतः पतिं।
प्रभुं भूतभविष्यस्य साम्प्रतस्य च सत्पतिं॥
गोविन्दचरणद्वन्द्वं प्रणम्य द्वन्द्वनाशनं।
प्रदीपं स्मृतिशास्त्रेषु कुरुते चन्द्रशेखरः॥
तत्रादौ तिथिस्वरूपमाह स्कन्दपुराणे।
अमा षोड़शभागेन देवि प्रोक्ता महाकला।
संस्थिता परमा माया देहिनां देहधारिणी॥ इत्यादि।

**End.** गुरुशिष्ययोरन्तरागमनेऽपि प्रोक्तवचनाद्दशोरात्रमनध्यायः। इति।

**Colophon.** इति महोपाध्यायश्रीचन्द्रशेखरशर्म्मविरचिते स्मृतिप्रदीपे अनध्यायविवेचनं। समाप्तोऽयं ग्रन्थः।

विषयः। तत्रादौ तिथिस्वरूपादिकथनं। मासादिलक्षणतद्भेदनिरूपणं। युग्मादितिथिव्यवस्थाकथनं। प्रतिपदादितिथिव्यवस्थाकथनं। तत्र तत्र विहितकृत्यनिरूपणञ्च। अम्बुवाची। नवान्नव्यवस्था। मन्वन्तरादिनिरूपणं। युगाद्याकथनं। एकादश्याद्युपवासविधिः। संक्रान्तिनिरूपणं। ग्रहणनिरूपणं। सहमरणविधिकथनं। अनुमरणादिविधिः। अशौचनिरूपणं। श्राद्धाधिकारिनिरूपणं। अशौचान्तदिनकृत्यनिरूपणं। वृषोत्सर्गादिविधिः। षोड़शश्राद्धनिरूपणं। पार्वणश्राद्धविधिकथनं। पार्वणश्राद्धतीर्थश्राद्धादिकालनिरूपणं। अष्टकाश्राद्धकालादिकथनं। विवाहनिरूपणं। सापिण्ड्यादिनिरूपणं। कन्यादिलक्षणकथनं। कन्यादानदिनिरूपणं। गर्भाधानादिसंस्कारनिरूपणं। सूतिकाषष्ठीपूजाविधिकथनं। बालरक्षाविधिकथनं विद्यारम्भादिकालनिरूपणमुखेन अनध्यायकालनिरूपणञ्च।

---

**No. 2219.** श्रुतिकल्पद्रुमः। Substance, country-made paper, 16 × 4½ inches. Folia, 88. Lines, 6 on a page. Extent, 1,747 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Dínanátha Bhaṭṭácháryáya. Appearance, decayed. Prose. Correct.

**S'rúti-kalpadruma** Principles of the Bhakti doctrine and refutation of the adual Vedánta theory and unreality of matter. The object of Bhakti is Kṛishṇa, whose divinity is vindicated. By Haridása, a Vaishṇava hermit.

Beginning. वन्दे मुकुन्दस्य पदारविन्दं वृन्दारवृन्दैरपि यन्न लभ्यं ।
सद्भक्तहृत्पद्मपरागरम्यं भक्तैकगम्यं रमयाधिगम्यं ॥
श्रुतिकल्पद्रुमो नाम ग्रन्थोऽयं हरिभक्तिदः ।
भक्ता एव प्रपश्यन्तु मा पश्यन्तु वहिर्मुखाः ॥
अथ भगवान् नन्दनन्दन एव श्रुतिस्मृतिपुराणादिषु शेषत्वेनाभिहितः । तथाहि इत्यादि ।
तथाहि ।

End. न चलति निजवर्णधर्म्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति नच हन्ति किञ्चिदुच्चैःस्थितमनसं तमवेहि विष्णुभक्तं ॥

Colophon. इति श्रीश्रीमन्नन्दनन्दनचरणारविन्दमधुव्रतहरिदासकृतः श्रुतिकल्पद्रुमः समाप्तः ।

विषयः । भगवान् नन्दनन्दनः श्रीकृष्ण एव परब्रह्मशब्दवाच्य इतिनिरूपणं। ब्रह्मणः साकारत्वनिरूपणं । भक्तिस्वरूपादिविवेचनं । तत्त्वज्ञानस्य भक्त्यङ्गत्वकथन । भक्तिविभागादिकथनं । श्रीमद्भागवतस्य श्रुतिकल्पद्रुमफलस्थानीयत्वकथनं । भक्त्यैव भगवत्प्राप्तिर्न तु ज्ञानादिनेतिनिरूपणं । भगवल्लीलयैव जगत्सृष्टिरितिनिरूपणं। जगतः सत्यत्वकथनं । मायावादमताक्षेपकीर्त्तनं । तार्किकादिमतनिन्दनं । सगुणनिर्गुणादिश्रुतीनां समन्वयनिरूपणं । पाषण्डादिशास्त्रकथनपूर्व्वकं तदाक्षेपकथनं । भगवद्भक्तौ सर्व्वेषामधिकार इतिनिरूपणं । भगवल्लीलादीनां नित्यत्वकथन । चिच्छक्त्यादिनिरूपणं । सालोक्यादिमुक्तिनिरूपणं । भगवद्भक्तानां मोक्षेच्छाराहित्यकथनं । प्रेमभक्तिनिरूपणं । भगवद्भक्तलक्षणकथनञ्च ।

---

No. 2220. सिद्धान्तमञ्जरीभावदीपिकाः । Substance, country-made paper, 15 × 4 inches. Folia, 200. Lines, 9 on a page. Extent, 6,492 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ránághāṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya. Appearance, old. Prose. Corect.

Siddhántamanjarí-bhávadípiká. A commentary on the Siddhántamanjárí of Jánakínátha. By Krishṇa S'armá.

Beginning. शैवालवल्ला रुचिरे तटिन्यास्तीरे भवान्यादरलेशशून्या ।
इन्द्रादिमान्या भुवनेष्वनन्या मां पातु धन्या गिरिराजकन्या ॥
प्रणम्य शिवयोः पादौ श्रीमता कृष्णशर्म्मणा ।
सिद्धान्तमञ्जरीव्याख्या क्रियते भावदीपिका ॥

प्रारिप्सितप्रतिबन्धकोपशमाय कृत परमात्मनमस्काररूपं मङ्गलं शिष्यशिक्षायै प्रसङ्गतोऽध्यापकाध्येतॄणां मङ्गलाचरणाय चाहेदा निबध्नाति प्रणम्येति ।

**End.** यद्यप्युद्देशेन तथोक्तं, तथापि यथोद्देशं ,जिज्ञासौचित्यात्———— इत्यतः परं खण्डितत्वात् परिसमाप्तिसूचकवाक्यं नास्ति ।

विषयः । जानकीनाथकृतन्यायसिद्धान्तमञ्जर्य्या व्याख्यानं ।

---

**No. 2221. सिद्धान्तमञ्जुषा ।** Substance, country-made paper, 18 × 4 inches. Folia, 122. Lines, 7 on a page. Extent, 3,229 Slokas. Character, Bengali. Date, Sm 1,658 Place of deposit, Ulá, Post Rányághâṭa, Zillá Nadiyá, Dínanátha Bhattácháryáya. Appearance, decayed. Prose. Correct.

**Siddhánta-manjúshá.** A dissertation on the adualistic Vedánta doctrine and refutation of all adverse doctrines. By S'iva Bhárati, disciple of Jnánendra Bhárati.

**Beginning.** प्रणम्य भगवत्पादान् ज्ञानेन्द्रभारतीयतीन् ।

कृता सिद्धान्तमञ्जूषा तत्कृपालेशतोमया ॥

अथ रुत्वात्मा वा अरे द्रष्टव्यः श्रोतव्योनिदिध्यासितव्यश्चेतिश्रुत्या आत्मतत्त्वज्ञानस्य अभ्यर्हितत्वोक्तेः——इत्यादि ।

**End.** अतएवाविद्यालेशानुवृत्त्या जीवन्मुक्तिरित्यादिसिद्धान्तरहस्यं ।

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्यज्ञानेन्द्रभारतीपूज्यपादशिष्यश्रीशिवभारतीकृता सिद्धान्तमञ्जूषा परिपूर्णा । , संवत् । १६५८ ।

विषयः । आत्मा वा अरे इत्यत्र नियमविधिरयमितिनिरूपणं । शुद्धं ब्रह्मैव जगदुपादानमितिनिरूपणं । मायाविद्ययोर्भेदवादिमतकथनपूर्व्वकं तत्खण्डनं । मायाशक्तिरेव उपादानमितिमतखण्डनं । उपादानलक्षणं । अध्यासादिस्वरूपविवेचनं । प्रत्यक्षादिप्रमाणषट्कनिरूपणं । अपरोक्षज्ञानस्वरूपकथनं । प्रत्यक्षात् श्रुतेः प्राधान्यनिरूपणं । प्रतिविम्बमिथ्यात्वमभ्युपगच्छतां मतखण्डनपूर्व्वकं विम्बप्रतिविम्बभावेन जीवेश्वरयोर्विभाग इतिनिरूपणं । मिथ्यात्वलक्षणकथनं । चित्तशुद्धिद्वारा कर्म्मणां विद्योपयोगित्वनिरूपणं । आत्मनोनिर्गुणत्वनिरूपणं । आकाशस्य नित्यत्ववादखण्डनं । जीवात्मस्वरूपनिरूपणं । मनसोनित्यत्ववादखण्डनमुखेन न्यायवैशेषिकसिद्धान्तखण्डनं । ब्रह्मस्वरूपनिरूपणं । सांख्यमतखण्डनं । एकजीववादव्यवस्थापनं । अपवर्गकारणनिरूपणप्रसङ्गेन नानामतखण्डनं । जीवन्मुक्तिनिरूपणञ्च ।

---

**No. 2222** रत्नमाला । Substance, country-made paper, 16 × 4 inches. Folia, 28. Lines, 6 on a page. Extent, 354 slokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ránághâṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya. Appearance, new. Verse. Incorrect.

**Ratnamálá** A collection of miscellaneous verses illustrating particular rhetorical maxims, with many riddles and enigmas. By Lakshmaṇa Bhaṭṭa.

**Beginning.** प्रणिपत्य हयग्रीवं मातरं पितरं गुरुं ।
रत्नमालां प्रकुर्व्वेऽहं मुग्धानां बोधकारकं ॥
अत्यन्तबालमतसीकुसुमावभासं
दिग्वाससं कनकभूषणभूषिताङ्गं ।
विस्रस्तकेशमरुणाधरमायताचं
कृष्णं नमामि मनसा वसुदेवसूनुं ॥ इत्यादि ।

**End.** स्नानं कृत्वा गता दृष्टा एकोना विंशतिः स्त्रियः ।
नक्रेण खादितोऽप्येका विंशतिर्गृहमागता ॥

**Colophon** इति श्रीलक्ष्मणभट्टकृता रत्नमाला समाप्ता ॥

विषयः । अप्रस्तुतप्रशंसालङ्कारप्रधानतया विविधप्रास्ताविकश्लोककथनं प्रहेलिकाकथनञ्च ।

---

**No. 2223.** सुभाषिणी । Substance, country-made paper, 15 × 4½ inches. Folia, 118. Lines, 8 on a page. Extent, 3,601 slokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ránághâṭa, Zillá Nadiyá, Dínanátha Bhaṭṭácháryáya. Appearance, decayed. Prose. Incorrect.

**Subháshiní.** A commentary on the Kirátárjuníya of Bháravi. By Manohara S'armá. The work is said to have been written under orders of Rájá Kshitipála Malla.

**Beginning.** नत्वा भवानीचरणारविन्दं मनोहरेण क्रियते विचार्य्य ।
माणिक्यमल्लक्षितिपालतुष्ट्यै सुभाषिणीभारविकाव्यटीका ॥

अथ महाकविर्भारविः प्रारिप्सितनिर्व्विघ्नपरिसमाप्तये मानसिकमङ्गलमाचरन् आशीर्नमस्क्रियेतिवचनोक्तिपरिपालनाय वस्तुनिर्द्देशं कटाक्षयन् श्रोतृप्रतिपत्तिद्वारा स्वप्रयोजनं चिकीर्षितं प्रस्तौति, श्रिय इति ।

**End.** लोकाभरया स्वतेजःसम्पदा अजगुःस्तुतवन्त इत्यर्थः ।

**Colophon.** इति समस्तनृपतिशिरोमणिमाणिक्यमकरवितिपालादिष्टश्रीमन्मनोहरशर्म्मकृतायां सुभाषिण्यां भारविटीकायामष्टादशः सर्गः ।

विषयः । भारविकृतकिरातार्ज्जुनीयकाव्यस्य व्याख्यानं ।

---

**No. 2224** चैतन्याष्टकम् । Substance, country-made paper, 16 × 4 inches. Folium, 1. Lines, 14. Extent, 22 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post, Ráṇághâṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya. Appearance, new Verse. Correct.

**Chaitanyáshṭaka.** Eight stanzas in praise of Chaitanya and expressive of the grief of the writer on the demise of that saint. By Rúpa Gos'vámí, a companion of the saint.

**Beginning.** हरिर्दृष्ट्वा गोष्ठे मुकुरगतमात्मानमतुलं
स्वमाधुर्य्यं राधा प्रियतरसखीवाप्तुमभितः ।
अहो गौड़े जातः प्रभुरपरगौरैकतनुभाक्
शचीसूनुः किं मे नयनसरणिं यास्यति पुनः ॥
पुरादेवस्यान्तः प्रणयमधुना स्नानमधुरो-
मुकुन्दोगोविन्दोद्विषदपरिचर्य्याचितपदः ।
स्वरूपस्य प्राणार्ब्बुदकमलनीराजितमुखः
शचीसूनुः किं मे नयनसरणिं यास्यति पुनः ॥ इत्यादि ।

**End** शचीसूनोरस्याष्टकमिदमभीष्टं विरचयन्
सदा दैन्योद्रेकादतिविषदबुद्धिः पठति यः ।
प्रकामं चैतन्यः प्रभुरतिकृपावेशविवशः
पृथुप्रेमाम्भोधौ प्रथितरसदे मज्जयति तं ॥

**Colophon.** इति श्रीरूपगोस्वामिकृतं चैतन्याष्टकं ।

विषयः । लोकान्तरगत गौराङ्गमुद्दिश्य स्तोत्रव्यपदेशेन तद्विरहविधुरस्य कवेस्तदीयरूपगुणमाधुर्य्यवर्णनं ।

---

**No. 2225.** व्रजविलासस्तवः । Substance, country-made paper, 16 × 4 inches. Folia, 8. Lines, 10 on a page. Extent, 260 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Bábu Annadáprasáda Mukhopádhyáya. Appearance, new. Verse. Correct.

**Vrajavilása-stava.** A hymn in praise of the frolics of Kṛishṇa at Vṛindávana. By Rúpa Gos'vámí.

Beginning प्रतिरङ्गभिर्बद्धं कामाद्यैरर्थपातिभिः।
छित्वा ताः संवरन्मत्तानघारेः पान्तु मां भटाः॥
दग्धं वार्द्धकवन्यवह्निभिरलं दष्टं दुरन्ताशिना।
विद्धं मामतिपारवश्यविशिखैः क्रोधादिसिंहैर्धृतं॥
स्वामिन् प्रेमसुधाद्रवं करुणया द्राक् पायय श्रीहरे।
येनैतानवधार्य मन्नतमह + + + + + + + ॥ इत्यादि।

End. इमं नियतमन्दिरव्रजविलासनामस्तवं
सदा व्रजजनोत्तमत्रधरमाधुरीबन्धुरं।
मुहुः कुतुकसम्भृताः परिपठन्ति ये बान्धवः
समं परिकरैर्दृढ मिथुनमत्र पश्यन्ति ते॥

Colophon. इति श्रीरूपकृतव्रजविलासस्तवः समाप्तः।

विषयः। स्तुतिव्याजेन श्रीकृष्णस्य वृन्दावनलीलामाहात्म्यवर्णनं।

---

**No. 2226** गौराङ्गस्तवकल्पतरुः। Substance, country-made paper, 16 × 5 inches. Folium, 1 Lines, 16. Extent, 25 slokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ránághata, Zilla Nadiyá, Annadáprasáda Mukhopádhyáya. Appearance, new. Verse. Correct.

**Gauráṅgastava-kalpataru.** A hymn in praise of the personal characteristics of Gauráṅga *alias* Chaitanya. By Rúpa Gos'vámí.

Beginning गतिं दृष्ट्वा यस्य प्रमदगजवर्य्येऽखिलजनाः
सुखश्च श्रीचन्द्रोपरि दधति धिक्कारनिवहं।
स्वकान्त्या यः स्वर्णाचलमधरयच्छ्रीश्च वच-
स्तरङ्गैः गौराङ्गो हृदय उदयन मे मदयति॥
अलंकृत्यात्मानं नवविविधरत्नैरिव बलु-
विवर्णत्वस्तम्भास्फुटवचनकम्पाश्रुपुलकैः।
हसन् स्विद्यन् नृत्यन् क्षितिगिरिपतेर्निर्भरमदे
परः श्रीगौराङ्गो हृदय उदयन् मे मदयति॥ इत्यादि।

**End.** इति श्रीगौराङ्गोद्गतविविधसद्भावकुसुम-
प्रभाभाजत्पद्यावलिसल्लितशाखं सुरमयं ।
मुकुन्दोऽतिश्रद्धौषधिरिव वल्गात्पाठमल्लिले-
रलं सिञ्चेद्विन्देत्सरसगुरु तल्लोकनफलं ॥

**Colophon.** इति श्रीरूपगोस्वामिविरचितगौराङ्गस्तवकल्पतरुः सम्पूर्णः ।

विषयः । स्तोत्रव्यपदेशेन गौराङ्गस्य प्रकृतिमाधुर्य्यवर्णनं ।

---

**No. 2227.** लीलावत्युदाहरणम् । Substance, country-made paper, 15 × 5 inches. Folia, 82. Lines, 9 on a page. Extent, 1,822 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Prose. Correct.

**Lílávatyudáharaṇa** Examples and exercises in illustration of Bháskara Ácháryá's rules of Algebra as given in his Lílávatí. By Viśveśvara.

**Beginning.** गोपालकृष्णमनिशं कुलदेवमुपास्महे ।
चरणस्मरणं यस्य सर्व्वसिद्धिषु साधनम् ॥

अथ श्रीभास्कराचार्य्यो विघ्नविनाशमिच्छन् ग्रन्थादौ नमस्कारवस्तुनिर्देशात्मकं मङ्गलमाचरति । प्रीतिं भक्तजनस्येति । इत्यादि ।

**End.** पुनः कीदृशी सरसोक्तिमुदाहरन्तीत्यर्थः ।

**Colophon.** इति श्रीभास्करीये सिद्धान्ते श्रीविश्वेश्वरकृतायां पाटयामुदाहरणं समाप्तं ।

विषयः । भास्कराचार्य्यकृतलीलावतीनामकगणितग्रन्थस्य व्याख्यानम् ।

---

**No. 2228.** तत्त्वसमासः । A. Substance, country-made paper, 10 × 4 inches. Folia, 16. Lines, 7 on a page. Extent, 240 ślokas. Character, Nágara. Date, ? Place of deposit. Calcutta, Professor Maheśachandra Nyáyaratna. Appearance, new. Prose. Generally correct.

B. Substance, country-made yellow paper, 12 × 3 inches. Folia, 16. Lines, 6 on a page. Extent, 240 ślokas. Character, Bengali. Date, ? Place of deposit, Sántipura, Rámanátha Tarkaratna. Appearance, new. Prose. Correct.

**Tattvasamása** A summary of the different topics of the Sáṅkhya doctrine, with an exegesis by an unnamed author. It is the

same work which has been noticed under No. 2198 (p. 260) as Kapila-sútra, but the exegesis is different. The introductory lines of the two MSS. now under notice are substantially the same as those in No. 2198, but the wording is different, and the name of the Bráhmaṇa is not given, nor is the text described to consist of 22 aphorisms in one chapter divided into 4 sections. The omission of the name is appropriate, for Ásuri is generally described to have been a brother of Kapila, and he could not with any propriety be made to describe his family, his race, and his name to his brother. The introduction runs thus:—

"A certain Bráhman, aggrieved by the three kinds of pain, had recourse to the great sage Kapila, the teacher of the Sáñkhya. Having declared his family, his name and race, and his desire of instruction, he said—'Venerable Sir! What is of all things the most important? What is actual truth? And what must I do, in order that I may have done what is fitting to be done?' Kapila replied—'I will tell you.'"

This introduction is followed by the so-called sútras, the number of which is not the same in the two codices under notice. A gives the number at 25, exclusive of the concluding line which describes the fruit of knowing the topics. The topics are-(1) "Eight 'produced' (*prakṛti*) ; (2) sixteen 'productions' (*vikára*) ; (3) 'soul' (*purusha*) ; (4) the 'triad of qualities' (*traiguṇya*) ; (5) 'development' (*sañchara*) ; (6) 'dessolution' (*pratisañchara*) ; (7) the 'instruments of soul' (*adhyátma*) ; (8) 'the province of an organ' (*adhibhúta*) ; (9) 'the presiding supernatural agent' (*adhidaivata*) ; (10) the five 'functions of the faculties' (*adhibuddhi*) ; (11) the five 'sources of action' (*karmma-yoni*) ; (12) the five 'airs' (*váyu*) ; (13) the five that consist of action (*karmmátman*) ; 14) 'ignorance' (*avidyá*) under five divisions ; (15) 'disability' (*aśakti*) of twenty-eight kinds ; (16) 'acquiescence' (*tushṭi*) of nine kinds ; (17) perfections (*siddhi*) of eight kinds ; (18) the 'radical categories' (*mulikártha*) of ten kinds ; (19) 'benevolent nature' (*anugraha-sarga*) ; (20) 'elemental creation' (*bhúta-sarga*) of ten kinds ; (21) 'parental creation' (*dhátusansarga*) of three kinds ; (22) threefold 'bondage' (*bandha*) ; (23) threefold 'liberation' (*moksha*) ; (24) threefold 'proof' (*pramána*) ; (25) threefold 'pain' (*duhkha*) :—in these consists all actual truth. He who shall have thoroughly understood this, will have done all that is to be done. He will not again be obnoxious to the three kinds of pain.

Such are the aphorisms of the *Sáñkhya* entitled the 'compendium of principles' (*tattvasamása*)."

B limits the number of the sútras to 23, omitting 21 and 25, making one sútra of 4 and 5, and reckoning the last line as a sútra. No. 2198, reduces the number to 22, by making one sútra of 7, 8 and 9. It, moreover, divides the sútras into 4 sections, ranging, the first three sútras in the first section, the next four in the second, the next 9 in the third, and the last six in the concluding section.

The enumeration of the sútras in A, obtains also in the translation given in the *Benares Magazine*, III p. 282. Mr. Hall notices other variations in the Preface to his edition of the *Sáṅkhya-pravachana-bháshya*, (p. 28,) and recites them with additions in the Preface to his edition of the *Sáṅkhya-sára*, (p. 12). The weight of evidence lean, on the whole, in favour of 22. But whatever their number they are the headings or titles of the topics which Kapila may have taught, and not the substance of his teachings. Nevertheless there is no doubt that the work is of considerable age, for it is unquestionably more ancient than the Sáṅkhya Sútra and the Sáṅkhya-káriká, from which it differs in some respects, and is obviously the oldest text on the Sáṅkhya available.

The name of the work is not given uniformly in the different codices. A names the sútras *Tattvasamása—Tattvasamásákhya Sáṅkhya sútráni*. So does the text printed in the *Benares Magazine*, both at the beginning and at the end. B, at the beginning has *athátah tattvasamásata sáṅkhya-sútrani vyákhyásyámah*, and at the end, *Iti sáṅkhya sútráṇi samáptáni*. No. 2198, which I have seen since writing its notice on page 260, has *Sáṅkhya-darasana bháshya* in the epigraph of section I; *Sáṅkhya-bháshya* in the rubrics of sections II and III; and *Sáṅkhyácharya-kapila-sútra-bháshya* in the colophon. The exegesis attached to the text is the same in A and B, but the first is named *Tattvasamásákhya-sáṅkhya-sútra-vritti-krama-dipiká*, and the second, *Sáṅkhya-sútra-kramenaiva vyakhyátá krama-dipiká*. No. 2198 obviously takes the name of the text to be *Sáṅkhya-sútra* alias *Kapila sútra*, and of the exegesis *Sáṅkhya-sútra-bháshya*. The name of its author has been incorrectly given on page, 260, and the error has arisen from the Paṇḍit who reported on it, having put in the word *krita* after *Sáṅkhyáchárya*. The word does not occur in the original MS The work must be taken to be anonymous, as is the exegesis given in A and B. Mr. Hall notices three other exegeses, the *Sarvopakáriṇí*, the *Sáṅkhya sútra-vivaraṇa*, and the *Sáṅkhya-krama-dípiká* alias *Sáṅkhyálenkára* or *Sáṅkhya-*

*sútra-prakshepiká* which are of anonymous authorship. The last may be the same with my A, but I have no means of ascertaining the fact. Mr. Hall notices two others, the *Tattvayáthártha-dípana* and the *Tattvasamása-vyákhyá*, by Bhávaganesa Díkshita and Kshemánanda respectively, but I have not seen them. Nor have I seen Dr. Ballantyne's translation of the text, which appeared in 1850. Not a single copy of it is available in Calcutta. Taking the different names noticed above into consideration, it appears the true name of the work is *Sánkhya-sútra*, and to distinguish it from the larger work which appeared subsequently, the descriptive epithet *tattvasamásatah* of the introduction has been latterly modified into *Tattvasamása* as the identifying name.

**Beginning.** पञ्चविंशतितत्त्वेषु जन्मना ज्ञानमाप्तवान् ।
आदिद्वष्टो नमस्तस्मै कपिलाय महर्षये ॥

अथातः तत्त्वसमासतः सांख्यसूत्राणि व्याख्यास्यामः । इह कश्चित् ब्राह्मणस्त्रिविधेन दुःखेनाभिहतः सांख्याचार्य्यं कपिलमहर्षिं शरणमुपागतः ।

**End.** एतत् समासतोनिःश्रेयसज्ञानं । यज्ज्ञात्वा पुनर्जन्म न स्यादिति ॥
एतन्महर्षेर्विज्ञानं कपिलस्य महात्मन. ।
तच्छ्रुत्वा ब्राह्मणः श्रेष्ठः कृतकृत्योऽभवत्तदा ॥
सांख्यसूत्रक्रमेणैषा व्याख्याता क्रमदीपिका ।
छन्दसामत्र +++ ज्ञेयं श्लोकशतत्रय ॥

**Colophon.** समाप्तैषा सांख्यक्रमदीपिका ।

**विषयः ।** तत्त्वसमासाख्यसांख्यग्रन्थस्य व्याख्या ।

---

**No. 2229.** **अर्थरत्नावली ।** Substance, country-made yellow paper, 13 × 4 inches. Folia, 122. Lines, 8 on a page. Extent, 3,993 ślokas. Character, Bengali. Date, ? Place of deposit, U'lá, Post Ránághâta, Zillá Nadiyá, Dínanátha Bhattáchárya. Appearance, new. Prose. Generally correct.

**Artha-ratnávalí.** A commentary on the Gítagovinda of Jayadeva. By Gopála Chakravartí, of the sept of Bandyaghati.

**Beginning.** त्वद्वक्त्रद्युतिनिर्ज्जितः शशधरोमालिन्यमाश्रितो-
मन्दं मन्दमुदेति भाविनि धिया व्रीडागतोहस्यतां ।
इत्थं चाटुकथाद्ध दक्षहृदयामालिङ्ग्य राधां चिर

चुम्बन् प्रेमरसावशां हरिरसौ पायादपायान्मुदं ॥

विलोक्यानेकशास्त्राणि विचार्य्य निपुणं मुहुः ।
गोपालः कुरुते टीकामर्थरत्नावलीमिमां ॥

गीतगोविन्दकाव्याब्धौ स्फुरन्ति कति नो रसाः ।
कथं ताम् कलयेत् सर्व्वान् मदीया बुद्धिरल्पिका ॥

काव्याब्धिपारीणजनैर्निरूपिता-
विभान्ति टीका बहुशोऽस्य यद्यपि ।
सतां मयेयं परितोषहेतवे
पदे पदे व्यक्तरसा विधीयते ॥

अर्व्वाचीनेत्यनास्थात्र नोचिता महतां सतां ।
रत्नाकरेण रत्नं किं नूत्नं यत्नान्न गृह्यते ॥

अथ निष्प्रत्यूहं प्रारिप्सितपरिसमाप्तिकामः कविकुलतिलकः सकलशास्त्रविशारदः परम-भागवतः भोजराजतनयः श्रीजयदेवोऽतिवहिर्मुखानपि अमानवैककरुणया श्रीहरिचरणस्मरणे प्रवर्त्तयितुमनाः श्रीकृष्णगुणवर्णनप्रधानं महाकाव्यमारभमाणः । सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणं । आशीर्नमस्क्रियावस्तुनिर्द्देशो वापि तन्मुखमिति काव्यादर्शोक्ताशीरूपमहाकाव्यलक्षण पुरस्कुर्व्वन् स्वकीयेष्टदेवताश्रीकृष्णक्रीडावर्णनरूपमङ्गलमाचरति । मेघैरित्यादि ।

**End.** अतएव उपचितीभूतः बहुलीभूत इत्यर्थः ।

प्रसङ्गात् यन्नाम क्वचिदपि ·‹+कण्ठपदवी—
गतं द्राक् पापौघं शमयति सुसिद्धौषधमिव ।
वचो यत्सेवायां रुचिरपि पुनात्याश्रम+कान्
मुदे तस्यास्तां मे कृतिरियमपूर्व्वा मुरजितः ॥

आसीद्वन्द्यकुलोज्ज्वलो गयघड़ी धीमान् हिरण्याभिध-
स्तत्सूनुः शिव इत्यभूच्छिवसुतो ज्ञानाङ्कयोऽभूत्ततः ।
दुर्गादास इति प्रसादवसतिस्तस्याङ्गजोऽयः कृती
गोपालः किल तेन निर्म्मलधिया टीका कृतेयं मुदा ॥

नवाङ्कबाणेन्दुमिते शकाब्दे मासे मधौ चण्डकरस्य वारे ।
टीकामिमां रूपवतीतनूजो गोपालशर्म्मा व्यतनोत्समग्रां ॥

**Colophon.** इति गयघड़वन्द्यघटीकुलप्रसूतश्रीगोपालचक्रवर्त्तिविरचितायां गीतगोवि-न्दटीकायामर्थरत्नावल्यां द्वादशसर्गविवरणं ।

**विषयः ।** जयदेवकृतगीतगोविन्दस्य व्याख्यानम् ।

---

**No. 2230.** शूद्राह्नःकृत्यतत्त्वम् । Substance, country-made yellow paper. 18 × 3½ inches. Folia, 10. Lines, 7 on a page. Extent, 256 ślokas. Character, Bengali. Date, Sk. 1768. Place of deposit, Sántipura, Kálidása Vidyávágíśa. Appearance, fresh. Prose and verse. Correct.

**S'údráhah-kritya-tattva.** A digest of the rules regarding the duties of Sudras. By Raghunandana Bhaṭṭáchárya.

Contents. S'ráddhas, daily offerings to the manes, offerings during the wane, Abhyúdayika or Śráddhas on auspicious occasions. Recitations of Vedic mantras prohibited. Gift of dressed rice prohibited. S'ráddhas to be performed according to the rules of the Yajur Veda. Pauránic mantras to be recited. The five Yajnas. Peculiarities in *áchamana* or religious washing of the mouth when commencing a service. Daily duties, washing of the mouth, brushing of the teeth, bathing, putting on sectarial marks (*tilakas*). Offering of water to the manes. Burnt offering to Visvedeváh. Sacrifices. Offering of grass to cows. Rules for meal time. Nocturnal duties. Sleeping. Going out.

**Beginning.** प्रणम्य सच्चिदानन्दं रामं पद्मदलेक्षणं ।
शूद्राह्नःकृत्यतत्त्वानि वक्ति श्रीरघुनन्दनः ।
तत्र नत्वा जगन्नाथं भुक्तिमुक्तिप्रदायकं ।
शूद्राणां तर्पणश्राद्धे वक्ति श्रीरघुनन्दनः ॥

अथ श्राद्धविधिः । मत्स्यपुराणे,—एवं शूद्रोऽपि सामान्य वृद्धिश्राद्धञ्च सर्व्वदा । नमस्कारेण मन्त्रेण कुर्य्यादामान्नवद्बुध । सामान्यं सर्व्वजनकर्त्तव्यत्व प्रतिपन्नं कृष्णपक्षादिविहितं श्राद्धं आभ्युदयिकञ्च । एवं द्विजातिवत् शूद्रोऽपि कुर्य्यादित्यन्वयः । नमस्कारेण मन्त्रेण न तु स्वयं पठितमन्त्रेण आमान्नवदित्यनेन जलोपसेकसिद्धमन्नं व्यावृत्य तेन तु कन्दुपक्व सिद्धमन्नमुदाहृतमित्यनेन सिद्धस्यैवान्नत्वनाभिधानात् । इत्यादि ।

**End.** अन्ततावपि गर्भमेत्वेऽपि कामुकीमुपेयादिति ।

**Colophon.** इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं शूद्राह्नःकृत्यतत्त्वं समाप्तं ।

विषयः । शूद्राणां श्राद्धकृत्यनिरूपणं । आह्निककृत्यनिरूपणञ्च । तत्र प्रतिमासीयकृष्णपक्षश्राद्धादौ शूद्रस्याधिकारनिरूपणं । मन्त्रपाठनिषेधकथनं । अन्नादिदानप्रतिषेधकथनं । यजुर्व्वेदोक्तविधिना कर्म्मानुष्ठानकर्त्तव्यताकथन । श्राद्धेऽपि पौराणिकोमन्त्रः शूद्रेण पठनीय इति मैथिलमतदूषणं । पञ्चयज्ञविधि । आचमने विशेषकथनं । आह्निकप्रयोगकथनं । आचमनप्रयोगकथनं । दन्तधावनप्रयोगकथनं । स्नानप्रयोगकथनं । तिलकादिविधिः । तर्पणप्रयोगकथन । अनग्नावपि वैश्वदेवहोमविधिः । बलिकर्म्मकथनं । तत्र तत्र प्रयोगकथनञ्च । गोग्रासदानप्रयोगकथनं । भोजनविधिकथनं । रात्रिकृत्यनिरूपणं । शयनविधिकथनं । दारोपगमनविधिकीर्त्तनञ्च ।

**No. 2231.** सप्तसूत्रसन्न्यासपद्धतिः। Substance, country-made paper, 12 × 3½ inches. Folia, 12. Lines, 12 on a page. Extent, 214 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, new. Prose and verse. Incorrect.

**Saptasútra-sannyása-paddhati.** Rules for the ordination of Sannyásis and of the different orders in which they are divided, preceded by a brief account of the ten great teachers and their descendants. The teachers are (1) Brahmá, Vishṇu and Rudra, (2) Vaśishṭha, (3) S'akti, (4) Paráśara, (5) Vyása, (6) S'uka, (7) Gauḍácbárya, (8) Govindacharya, (9) S'aṅkaráchárya, (10) Rúpavedántáchárya. The four principal disciples of S'aṅkaráchárya were—Svarúpáchárya, Padmácharya, Totakáchárya, and Pṛthvídharáchárya. Of these, the first had for his disciples Tírtha and A'śrama; the second had Vana and Jraraṇya; the third had Giri, Parvata, and Ságara; and the fourth had Sarvasvatí, Bhárati, and Puri, and each of these established a separate order of Sannyásis. This account is followed by the rules for ordination on the following subjects, viz. initation in particular mantras, prayer for ordination, offering of water to the manes, Ashṭaká śráddha, Visyahoma, the burning of the sacred thread, the crown-lock and other emblems of domestic life, bathing, prayers at stated times, mental worship, rest and reading of the Upanishads, reading of hymns for final emancipatory Yoga, reading of Panchíkaraṇa, meditation or Samádhi, understanding of the Vedic text "Thou art that," reading of the Upanishads inculcating rejection of household life, recitation of particular mantras, ordination of Paramahansas, do. of Digambaras, trials of Sannyásis.

ॐ गणेशाय नमः।

**Beginning.** आदौ वेदाम्नाचार्य्यः ब्रह्मा, द्वितीये आचार्य्यः विष्णुः। तृतीये आचार्य्यः रुद्रः, चतुर्थे आचार्य्यः वसिष्ठः। इत्यादि।

**End.** तीर्थाश्रमवनारण्यगिरिपर्व्वतसागराः।
सरस्वती भारतीच पुरी नाम उदाहृतं॥

आनन्दचैतन्यस्वरूपे प्रकाशयेति। (भोगवार-कीटवार-आनन्दवार-भूतवार)?। इति चत्वारः सम्प्रदायाः।

**Colophon.** इति सप्तसूत्रसन्न्यासपद्धतिः समाप्ता।

विषयः। सन्न्यासग्रहणप्रकारादिकथनं। तत्र ब्रह्मविष्णुरुद्र-वसिष्ठ-शक्ति-पराशर-व्यास-शुक-गौड़ाचार्य्य-गोविन्दाचार्य्य-शङ्कराचार्य्य-रूपवेदान्ताचार्य्यदशककथनं। अथ स्वरूपाचार्य्यः पद्माचार्य्यः, तोटकाचार्य्यः पृथ्वीधराचार्य्यश्चेति शङ्कराचार्य्यस्यान्तेवासिनश्चत्वारः प्रधानाः। तत्र क्रमेण स्वरूपाचार्य्यस्य तीर्थ आश्रमश्च पद्माचार्य्यस्य वनः अरण्यश्च तोटकाचार्य्यस्य गिरिः पर्व्वतः सागरश्च पृथ्वीधराचार्य्यस्य च सरस्वती भारती पुरी चेति शिष्या बभूवुः। अथ सन्न्यासग्रहणप्रयोग-कथनं। दीक्षाविधिकथनं। सन्न्यासप्रार्थनविधिः। तर्पणविधिः। अष्टकाश्राद्धविधिः। वीर्य्याहोमवि-धिः। तत्र यज्ञोपवीतशिखादिहोमविधिकथनञ्च। स्नानविधिः। सन्ध्यावन्दनविधिः। मानसोप-चारेण पूजाविधिः। विश्रामोपनिषत्पाठविधिः। निर्व्वाणयोगपद्पाठविधिः। पञ्चीकरणपाठः। समाधिविधिः। तत्त्वमस्यादिमहावाक्यार्थप्रबोधप्रकारकथनं। आश्रमविवेकोपनिषत्पाठः। पुरु-षोच्चारमन्त्रादिकथन। परमहंसदीक्षाविधिः। दिगम्बरदीक्षाविधिः। परीक्षाविधिकथनञ्च।

---

No. 2232 द्वादशयात्राप्रमाणतत्त्वम्। Substance, country-made yellow paper, 18 × 3 inches. Folia, 12. Lines, 6 on a page. Extent, 254 ślokas. Character, Bengali. Date, ?. Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágíśa; another copy at Ulá, Post Ráṇághaṭa, Zillá Nadiyá, Gopínátha Bhaṭṭáchárya. Appearance, fresh. Prose and verse. Correct.

**Dvádaśayátrápramaṇa-tattva.** Proofs regarding the twelve great festivals of Vishnu. By Raghunandana Bhaṭṭáchárya. The festivals are,—Chandana Yátrá, Snána Yátrá, Guṇḍichá Yátrá, (in the months of Áshádha, Mágha, and Chaitra) Sayana Yátrá, Dakshiṇa-párśva-parivartana Yátrá, Váma-párśva-parivartana Yátrá; Utthána Yátrá, Chhádaní Yátrá, Pushyábhiseka, Sapyodanavidhi, Dola Yátrá, Madana-bhanjiká. Detailed accounts of these festivals will be found in my 'Antiquities of Orissa,' Vol. II.

**Begininng.** प्रणम्य जगतां नाथं कलिकल्मषनाशनं।
द्वादशयात्रातत्त्वानि वक्ति श्रीरघुनन्दनः॥
तत्रादौ द्वादशयात्राकालस्य मुख्योपादेयत्वात् स एवादौ निरूप्यते। इत्यादि।

**End.** तस्यां से स्नपनं कुर्य्यान्महास्नानविधानतः।
इति सामान्यमहास्नानातिदेशादिति।

**Colophon.** इति द्वादशयात्राप्रमाणतत्त्वं। समाप्तं।

विषयः। वैशाखादिद्वादशमासेषु विष्णोर्द्वादशयात्राविधिनिरूपणं। तत्र यात्राकालनिरू-पणं। वैशाखे चन्दनयात्राविधिः। ज्यैष्ठे स्नानयात्राविधिः। आषाढ़शुक्ल द्वितीयायां माघशुक्लप-

षष्ठ्यां चैत्रशुक्लाष्टम्याञ्च गुण्डिचायात्राकथनं। आषाढ़मासे गुण्डिचायात्रायाः फलादिविवरणकथनं। रथनिर्म्माणादिविधिः। श्रावणे शयनयात्राविधिः। भाद्रे दक्षिणपार्श्वीययात्राविधिः। आश्विने वामपार्श्वीययात्राविधिः। कार्त्तिके उत्थानयात्राविधिः। अग्रहायणे छादनीयात्राविधिः। पौषे पुष्याभिषेकविधिः। माघे शाल्योदनीविधिः। फाल्गुने दोलयात्राविधिः। चैत्रे मदनभञ्जिका-विधिकथनञ्च।

---

**No. 2233.** पुष्पाञ्जलिः। Substance, country-made paper, 11 × 3½ inches. Folia, 4. Lines, 10 on a page. Extent, 63 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Gopívallabha Bhaṭṭácházrya; another copy at S'ántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Verse. Generally correct.

**Pushpáñjali.** A hymn in praise of the Deví. By Ráma-krishṇa.

**Beginning.** भगवतीभगवत्पदपङ्कजं भ्रमरभूतसुरासुरसेवितं।
सुजनमानसहंसपरिष्कृतं कमलयामलया निभृतं भजे॥
तावुभावपि वन्देऽहं विघ्नेशकुलदैवतौ। इत्यादि।

**End.** इन्द्र + रम्यावकुविन्दगम्यो
मुकुसुंकुविन्दु + + + नन्द्याः।
श्रीपतेः सूनुना कारितोयोऽधुना।
संस्तवः प्रीतये विश्वमातुः सदा॥

**Colophon.** इति श्रीरामकृष्णविरचितः पुष्पाञ्जलिः सम्पूर्णः।

**विषयः।** स्तोत्रव्याजेन भगवत्या महात्म्यादिकथन।

---

**No. 2234.** गोविन्दस्तोत्रम्। Substance, country-made paper, 11 × 3½ inches. Folia, 5. Lines, 7 on a page. Extent, 75 ślokas. Character, Nágara. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Gopívallabha Bhaṭṭácházrya; another copy at S'ántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Verse. Generally correct.

**Govinda-stotra** ALIAS **Vilvamangala-stava.** A hymn in praise of Vishṇu as Govinda. By Vilvamangala.

Beginning. श्रीकृष्ण विष्णो मधुकैटभारे
भक्तानुकम्पिन् भगवन् मुरारे ।
त्रायस्व मां केशव लोकनाथ
गोविन्द दामोदर माधवेति ॥
अग्रे कुरूणामथ पाण्डवानां
दुःशासनेनाहृतवस्त्रकेशा ।
कृष्णा तदा क्रोशदनन्यनाथा
गोविन्द दामोदर माधवेति ॥ इत्यादि ।

End. सुखावसाने इदमेव सारं दुःखावसाने इदमेव गेयं ।
देहावसाने इदमेव जाप्यं गोविन्द दामोदर माधवेति ॥ ४९ ॥

Colophon. इति श्रीविल्वमङ्गलकृतं गोविन्दस्तोत्रं समाप्तं । शुभमस्तु सर्व्वेषां ।

विषयः । गोविन्दस्य स्तोत्रव्याजेन तन्नामादिमाहात्म्यकीर्त्तनं ।

---

No. 2235. द्विरूपकोषः वा शब्दभेदप्रकाशः । Substance, country-made paper, 11 × 3 inches. Folia, 8. Lines, 7 on a page. Extent, 61 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Gopívallabha Bhaṭṭácharya. Appearance, new. Verse. Generally correct.

**Dvirúpakosha** alias **S'abdabheda-prakáśa**. A vocabulary of synonyms and homophonous words. By Purushottama Deva. Vide No. 223, Vol I, p. 118, for another work of this class.

Beginning. प्रबोधमाधातुमशाब्दिकानां कृपामुपेत्यापि सतां कवीनां ।
कृतोमया रूपमवाप्य शब्दभेदप्रकाशोऽखिलवाङ्मयार्थः ॥
विद्यादगारमागारमपगामापगामपि ।
अरातिमारातिमथो अम आमः प्रकीर्त्तितः ॥ इत्यादि ।

End. अन्त्यस्थीयवकारस्तु पवनस्यापि कथ्यते ।
तन्तुवायस्य वायेऽपि तन्त्रादित्वञ्च दृश्यते ॥

Colophon. इति पुरुषोत्तमदेवकृतो द्विरूपकोषः सम्पूर्णः ।

विषयः । एकार्थप्रतिपादकानामनेकरूपशब्दानां रूपभेदनिरूपणं ।

---

**No. 2236.** मानसिकपूजनम्। Substance, country-made paper, 10 × 8½ inches. Folia, 6. Lines, 12 on page. Extent, 99 ślokas. Character, Nágara. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Gopívallabha Bhaṭṭácharya; another copy at S'ántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Verse. Correct.

**Mánasika-pújana.** A hymn in which Vágdeví, the goddess of learning, is mentally worshipped. By S'aṅkara Áchárya.

**Beginning.** उषसि मागध मङ्गलगायनैर्भटिति जागृहि जागृहि जागृहि।
अतिकृपार्द्रकटाक्षनिरीक्षणैर्जगदिदं जगदम्ब सुखीकुरु॥
कनकमयवितर्दिशोभमानं दिशि दिशि पूर्णसुवर्णकुम्भयुक्तं।
मणिमयमण्डपमध्यमेहि मातर्मयि कृपया हि समर्चनं गृहीतुं॥ इत्यादि।

**End.** प्रत्यहं भक्तिसंयुक्तो यः पूजनमिदं पठेत्।
वाग्वादिन्याः प्रसादेन वत्सरात् स कविर्भवेत्॥

**Colophon.** इति शङ्कराचार्य्यविरचितं मानसिकपूजनं समाप्तं।

विषयः। मानसोपचारेण वाग्देव्याः पूजाविधिकथनमुखेन तन्माहात्म्यादिकीर्त्तनं।

---

**No. 2237.** श्राद्धप्रदीपः। Substance, palm leaf, 13 × 2 inches. Folia, 78. Lines, 5 on a page. Extent, 1,467 ślokas. Character Bengali. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá Nadiyá, Gopívallabha Bhaṭṭácharya. Appearance. Prose and verse. Correct.

**S'ráddha-pradípa.** A summary of the rules for the performance of various kinds of S'ráddhas. By Madanamanohara Mahámahopádhyáya, son of Madhusúdana Paṇḍitarája.

**Beginning.** संसारतापहतये हृदये निधाय
श्रीकृष्णपादकमलद्वयमादरेण।
वाक्यानि सम्यगवधार्य्य मुनीश्वराणां
श्राद्धप्रदीपमिह वच्मि यजुर्हिताय॥

तत्र कस्तावत् श्राद्धपदशक्यतावच्छेदक इति विविच्यते। इत्यादि।

**End.** तात्पर्य्यविषयाभावात् यावद्वचनं हि वाचनिकमितिन्यायादिति।

**Colophon.** इति महामहोपाध्यायपण्डितराजमधुसूदनात्मजमहामहोपाध्यायश्रीमदनमनोहरविरचिते श्राद्धप्रदीपे तीर्थश्राद्धप्रकरणं। समाप्तोऽयं ग्रन्थः।

विषयः। यजुर्व्वेदिनां श्राद्धविधिनिरूपणं। तत्र श्राद्धस्वरूपकथनं। निमन्त्रणादिविधिकथनं। श्राद्धपरिभाषाकथनं। विहिताविहितद्रव्यनिरूपणं। श्राद्धे मत्स्यमांसादीनां देयत्वनिरूपणं।

पार्व्वणश्राद्धविधिकथनं। श्राद्धाङ्गनिरूपणं। पार्व्वणैकोद्दिष्ट दिष्टदुमिकर्त्तव्यताभेदकथनं। आभ्युदयिकश्राद्धविधिकथनं। सपिण्डीकरणश्राद्धविधिकथनं। एकोद्दिष्टविधिकथनं। आद्यश्राद्धविधिः। आमश्राद्धविधिः। स्त्रीशूद्रकर्त्तृकश्राद्धविधिकथनं। विप्लपतितादिश्राद्धकालकथनं। मासिकसपिण्डीकरणादिश्राद्धकालकथनं। अष्टकादिश्राद्धकालनिरूपणं। पिण्डपितृयज्ञादिविधिकथनं। नित्यश्राद्धविधिकथनं। तीर्थश्राद्धविधिकथनं। अधिकारिनिरूपणञ्च।

---

**No. 2238. प्रायश्चित्तपारिजातः।** Substance, country-made paper, 16 × 5 inches. Folia, 82. Lines, 9 on a page. Extent, 2,645 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ránágháṭa, Zillá Nadiyá, Gopívallabha Bhaṭṭácbárya. Appearance, decayed. Prose and verse. Incorrect.

**Práyaśchitta-párijáta.** A digest of the Smṛiti rules for performing expiatory penances for various offences. By Ratnapáṇi.

**Beginning.** नत्वा रविन्दाक्षपदारविन्दं स्वर्गापवर्गद्रुममूलनालं।

श्रीरत्नपाणिः कृतिनां हिताय करोति साधुस्मृतिपारिजातं॥

अथ प्रायश्चित्तस्य पापक्षयमात्रसाधनत्वेनाभ्यर्हितत्वात्——इत्यादि।

**End.** इति कामधेनूक्तमादरणीयं। अन्यत्तु सुधीभिः स्वयमूहनीयमिति।

**Colophon.** इति पदवाक्यप्रमाणरत्नाकरश्रीरत्नपाणिविरचिते प्रायश्चित्तपारिजाते प्रकीर्णकप्रकरणं सम्पूर्णं। समाप्तोऽयं ग्रन्थः।

विषयः। प्रायश्चित्तस्वरूपकथनं। प्रायश्चित्ताकरणे दोषकथनं। ब्रह्महत्यादिमहापातकादिनिरूपणं। पारिभाषिक ब्रह्मघातकलक्षणं। निमित्तिनोऽपि वधभागित्वकथनं। प्राणान्तिकप्रायश्चित्तकथनं। तत्र मरणविधिकथनञ्च। द्वादशवार्षिकव्रतविधानं। प्राजापत्यादिव्रतविधानं। मुख्याशक्तौ अनुकल्पविधिकथनं। तत्र धेनुसङ्कल्पनादिविधिकथनं। क्षत्रियवैश्यादिकृतब्रह्महत्याप्रायश्चित्तं। ब्राह्मणस्य क्षत्रियादिहत्याप्रायश्चित्तं। क्षत्रियादेः वैश्यादिहत्यादिप्रायश्चित्तं। ब्राह्मणादिवधार्थमुद्यतस्य कथङ्कारं तत्राकृतार्थस्य प्रायश्चित्तं। सुरापानादिप्रायश्चित्तं। तत्र क्षत्रियादीनां विशेषकथनं। सुवर्णचौर्य्यादिप्रायश्चित्तं। सामान्यतः चौर्य्यप्रायश्चित्तं। गुर्व्वङ्गनागमनप्रायश्चित्तं। स्त्रीवधप्रायश्चित्तं। गर्भवधप्रायश्चित्तं। व्यभिचारिण्यादिवधप्रायश्चित्तं। प्रायश्चित्ताभावनिरूपणं। तत्प्रसङ्गनिरूपणं। गोवधादिप्रायश्चित्तं। तदपवादकथनं। प्रकीर्णकप्रायश्चित्तकथनञ्च।

---

**No. 2239. स्मृतिचन्द्रिका।** Substance, country-made paper, 17 × 4 inches. Folia, 188. Lines, 8—9 on a page. Extent, 12,900 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇágháṭa, Zillá

